# अथ ऋग्वेदप्रातिशाख्यम्

## अथ प्रथमं पटलम्

अष्टौ समानाक्षराण्यादितस् ततश् चत्वारि सन्ध्यक्षराण्युत्तराणि
एते स्वरा इपरो दीर्घवत्प्लुतोऽनुस्वारो व्यञ्जनं वा स्वरो वा १

सर्वः शेषो व्यञ्जनान्येव तेषामाद्या स्पर्शाः पञ्च ते पञ्चवर्गाः
चतस्रोऽन्तस्थास्तत उत्तरेऽष्टा ऊष्माणोऽन्त्याः सप्त तेषामघोषाः २

वर्गे वर्गे च प्रथमावघोषौ युग्मौ सोष्माणाव नुनासिकोऽन्त्यः
तस्मादन्यमवसाने तृतीयं गार्ग्य स्पर्शं प्रथमं शाकटायनः ३

ओजा ह्रस्वाः सप्तमान्ताः स्वराणाम् अन्ये दीर्घा उभये त्वक्षराणि
गुरूणि दीर्घाणि यथेतरेषां संयोगानुस्वारपराणि यानि ४

अनुस्वारो व्यञ्जनं चाक्षराङ्गं स्वरान्तरे व्यञ्जनान्युत्तरस्य
पूर्वस्यानुस्वारविसर्जनीयौ संयोगादिर्वा च परक्रमे द्वे ५ १

मात्रा ह्रस्वम् तावदवग्रहान्तरं द्वे दीर्घ स्तिस्रः प्लुतः उच्यते स्वरः
अधः स्विदासी३दुपरि स्विदासी३दर्थे प्लुतिर्भीरिव विन्दतीँ३त्रिः ६

स्वरभक्तिः पूर्वभागक्षराङ्गं द्राघीयसी सार्धमात्रेतरे च
अर्धोनान्या रक्तसंज्ञोऽनुनासिकः संयोगस्तु व्यञ्जनसंनिपातः ७

कण्ठ्योऽकारः प्रथमपञ्चमौ च द्वा ऊष्मणां केचिदेता उरस्यौ
ऋकारल्कारावथ षष्ठ ऊष्मा जिह्वामूलीयाः प्रथमश्च वर्गः ८

तालव्यावेकारचकारवर्गाविकारैकारौ यकारः शकारः
मूर्धन्यौ षकारटकारवर्गौ दन्तमूलीयस्तु तकारवर्गः ९

सकाररेफलकाराश्च रेफं बर्स्व्यमेके शष ओष्ठ्योऽपवाद्य

नासिक्यान् नासिक्ययमानुस्वारान् इति स्थानान्यत्र यमोपदेशः १० २

जिह्वामूलं तालु चाचार्य आह स्थानं डकारस्य तु वेदमित्रः
द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः ११

ळहकारतामेति स एव चास्य ढकारः सन्नुष्मणा संप्रयुक्तः
इळा साळ्हा चात्र निदर्शनानि वीड्वङ्ग इत्येतदवग्रहेण १२

न्यायैर्मिश्रानपवादान्प्रतीयात् सर्वशास्त्रार्थं प्रतिकण्ठमुक्तम्
स्थानप्रश्लेषोपदेशे स्वराणां ह्रस्वादेशे ह्रस्वदीर्घौ सवर्णौ १३

असावमुमिति तद्भावमुक्तं यथान्तर पादवच्चैव प्रैषान्
प्राक्चानार्षादितिकरणात्पदान्ताँस् तद्युक्तानां तेन येऽसंहितानाम् १४

सामवशा इति चैवापवादान् कुर्वन्ति ये संपदं पादवृत्तयोः
अप्रत्याम्नाये पदवच्च पद्यान् ऋते नतोपाचरितक्रमस्वरान् १५ ३

अष्टावाद्यानवसानेऽप्रगृह्यानाचार्या आहुरनुनासिकान्स्वरान्
तत्त्रिमात्रे शाकल दर्शयन्त्याचार्यशास्त्रापरिलोपहेतवः १६

ऋकारादयो दश नामिनः स्वराः पूर्वो नन्ता नतिषु नम्यमुत्तरम्
सहोपधोऽरिफित एकवर्णवद् विसर्जनीयः स्वरघोषवत्परः १७

ओकार आमन्त्रितजः प्रगृह्यः पदं चान्योऽपूर्वपदान्तगश्च
षष्ठादयश्च द्विवचोऽन्तभाजस्त्रयो दीर्घाः साप्तमिकौ च पूर्वौ १८

अस्मे युष्मे त्वे अमी च प्रगृह्या उपोत्तमं नानुदात्तं न पद्यम्
उकारश्चेतिकरणेन युक्तो रक्तोऽपृक्तो द्राघितः शाकलेन १९

ऊष्मा रेफी पञ्चमो नामिपूर्वो महोऽपोवर्जमितरो यथोक्तम्
अन्तोदात्तमन्तरक्षार्विपर्यये स्पर्शे चोषः प्रत्यये पूर्वपद्यः २० ४

प्रातर् देवं भार् वधराद्युदात्तं करनुदात्तम् अबिभस् तदादः
स्तः प्रागाथमे तशे कर् दिवे कर् अपस्करत्सारविपूर्वमस्तः  २१

स्वः स्वरितं न समासाङ्गमुत्तरं स्वरादेशोऽपूर्वपदेष्ववर्महः
अनर्घर्चान्ते स्वरघोषवत्परमूधर्न रेफेऽरुषासोऽतृणन्मही  २२

वरवरावरिति चैकपादे व्यपपूर्वाण्यसमासाङ्गयोगे
पथ्या मघोनी दिवि चक्षसा मदे पूर्वोऽर्चिषातीतृषामोत्तरेषु न  २३

होतः सनितः पोतर्नेष्टः सोतः सवितर्नेतस्त्वष्टः
मातर्जनितर्भ्रातस्त्रात स्थातर्जरितर्धातर्धर्तः  २४

जामातर्दुहितर्दर्तः प्रशास्तरवितः पितः
दोषावस्तरवस्पर्तः प्रयन्तश्चेङ्ग्यमुत्तमम्  २५

दीधरभारवरीवरदर्दर् दर्दरदर्धरजागरजीगः
वारपुनः पुनरस्परक स्पः सस्वरहः सनुतः सबरस्वाः  २६   ५

इति ऋग्वेदप्रातिशाख्ये प्रथमं पटलम्

अथ द्वितीयं पटलम्

संहिता पदप्रकृतिः पदान्तान् पदादिभिः संदधदेति यत्सा
कालाव्यवायेन स्वरान्तरं तु विवृत्तिः सा वा स्वरभक्तिकाला  १

पदान्तादिष्वेव विकारशास्त्रं पदे दृष्टेषु वचनात्प्रतीयात्
पदं पदान्तादिवदेकवर्णं प्रश्लिष्टमप्यानुपूर्व्येण संधीन्  २

एष स्य स च स्वराश्च पूर्वे भवन्ति व्यञ्जनमुत्तरं यदैभ्यः
तेऽन्वक्षरसंधयोऽनुलोमाः प्रतिलोमास्तु विपर्यये त एव  ३

तत्र प्रथमास्तृतीयभावं प्रतिलोमेषु नियन्त्यथेतरेषु
ऊष्मा परिलुप्यते त्रयाणां स्वरवर्जं न तु यत्र तानि पद्याः  ४

पुरएता तितउना प्रउगं नमउक्तिभिः
अन्तःपदं विवृत्तयो अतोऽन्याः पदसंधिषु ५ १

समानाक्षरे सस्थाने दीर्घमेकमुभे स्वरम्
इकारोदय एकारमकारः सोदयस् तथा ६

उकारोदय ओकारं परेष्वैकारमोजयोः
औकारं युग्मयोरेते प्रश्लिष्टा नाम संधयः ७

समानाक्षरमन्तस्थां स्वामकण्ठ्यं स्वरोदयम्
न समानाक्षरे स्वे स्वे ते क्षैप्राः प्राकृतोदयाः ८

विसर्जनीयोऽरिफितो दीर्घपूर्वः स्वरोदयः
आकारमुत्तमौ च द्वौ स्वरौ ताः पदवृत्तयः ९

ह्रस्वपूर्वस्तु सोऽकारं पूर्वौ चोपोत्तमात्स्वरौ
त उद्ग्राहा दीर्घपरा उद्ग्राहपदवृत्तयः १० २

ओष्ठ्ययोन्योर्भुग्नमनोष्ठ्ये वकारोऽत्रान्तरागमः
ऋकार उदये कण्ठ्यावकारं तदुद्ग्राहवत् ११

उद्ग्राहाणां पूर्वरूपाण्यकारे प्रकृत्या द्वे ओ भवत्येकमाद्यम्
प्राच्यपञ्चालपदवृत्तयस्ताः पञ्चालानामोष्ठ्यपूर्वा भवन्ति १२

अथाभिनिहितः संधिरेतैः प्राकृतवैकृतैः
एकीभवति पादादिरकारस्तेऽत्र संधिजाः १३

अन्तःपादमकाराच्चेत् संहितायां लघोर्लघु
यकाराद्यक्षरं परं वकाराद्यपि वा भवेत् १४

अन्याद्यपि तथायुक्तमावोऽन्तोपहितात्सतः

अयेऽयोऽवेऽव इत्यन्तैरकारः सर्वथा भवन् १५ ३

व इत्येतेन चा न प्र क्व चित्रः सवितैव कः
पदैरुपहितेनैतैः सर्वैरेवोदयाः परे १६

अदादवर्त्रोऽजनयन्ताव्यत्या अभेदयोऽपाष्टिरवन्त्ववीरता
अमुमुक्तममतयेऽनशामहा अव त्वचोऽवीरतेऽवांस्यवोऽरथाः १७

वासोवायोऽभिभुवे कवष्यः संक्रन्दनो धीजवनः स्वधावः
उत्सादत ऋतावः सगर्भ्यो हिरण्यशृङ्ग इति चोपधाभिः १८

येऽरा रायोऽध मेऽधायि नोऽहिरग्नेऽभिदासति
जायमानोऽभवोऽग्नेऽयं नृतोऽपोंहोऽतिपिप्रति १९

जम्भयन्तोऽहिं मरुतोऽनुभर्त्री यवसेऽविष्यन्वयुनेऽजनिष्ट
वृत्रहत्येऽवीः समरेऽतमाना मरुतोऽमदन्नभितोऽनवन्त २० ४

ब्रुवतेऽध्वँस्तवसेऽवाचि मेऽरपद् दधिरेऽग्ना नहुषोऽस्मत्पुरोऽभिनत्
उप तेऽधां वहतेऽयं यमोऽदितिर् जनुषोऽया सुवितोऽनु श्रियोऽधित २१

वपुषेऽनु विशोऽयन्त सन्तोऽवद्यानि खेऽनसः
भरन्तोऽवस्यवोऽवोऽस्तु बुध्न्योऽजो मायिनोऽधमः २२

देवोऽनयत्पुरूवसोऽसुरघ्नो भूतोऽभि श्वेतोऽरुषस्तेन नोऽद्य
येऽजामयस्तेऽरदन्नोऽधिवक्ता तेऽवर्धन्त तेऽरुणेभिः सदोऽधि २३

स्वाध्योऽजनयन्धन्वनोऽभिमातीरग्नेऽप दह मनसोऽधि योऽध्वनः
योऽह्यस्तेऽविन्दँस्तपसोऽधि न योऽधि पादोऽस्य योऽति ब्राह्मणोऽस्य
योऽनयत् २४

सोऽस्माकं यो द्वेषोभ्योऽन्यकृतेभ्यस् तेभ्योऽकरं पयस्वन्तोऽमृताश्च

अन्योऽर्वाकेऽथो इति नोदयेषु पुत्रः पराके च परावतश्च २५ ५

अन्तःपादं च वयो अन्तरिक्षे वयो अस्याश्रथयो हेतयस्त्रयः
वो अन्धसः शयवे अश्विनोभये श्रवो अधि सार्ञ्जयो जामयः पयः २६

प्रकृत्येतिकरणादौ प्रगृह्याः स्वरेषु चाष्यां प्रथमो यथोक्तम्
सहोदयास्ताः प्रगृहीतपदाः सर्वत्रैव त्र्यक्षरान्तास्तु नेवे २७

आर्ष्यामिव संध्ययकारपूर्वो विवृत्तेश्च प्रत्ययः सन्नुकारः
ऊकारादौ स्विति पूषेत्यकारे न चेत्तदेकाक्षरतत्रपूर्वम् २८

श्रद्धा सम्राज्ञी सुशमी स्वधोती पृथुज्रयी पृथिवीषा मनीषा
अया निद्रा ज्या प्रपेति स्वराणां मुख्ये परे पञ्चमषष्ठयोश्च २९

स्वरे पादादा उदये सचेति ष्वन्तं जोषं चर्षणीश्चर्षणिभ्यः
एकारान्तं मित्रयोरस्मदीवन् नमस्युरित्युपधं चेत्यपृक्तम् ३० ६

एकारौकारपरौ च कण्ठ्यौ लुशादर्वाग् गोतमे चामिनन्त
विभ्वा विधर्ता विपन्या कदा या मातेत्यृकारेऽप्यपादादिभाजि ३१

परुच्छेपे भीषा पथेत्यकार एवाँ अग्निमत्रिषु सा प्लुतोपधा
सचादयो या विहिता विवृत्तयः प्लुतोपधान्ता अनुनासिकोपधाः ३२

सेदु सास्मिन्सेमभि साभिवेगः सेदृभवः सोपमा सौषधीरनु
सास्मा अरं सोत नः सेन्द्र विश्वा सेति सास्माकमनवद्य सासि ३३

सेदग्ने सेदग्निर्वासिष्ठं सास्माकेभिः सेदुग्रः सेमे
सैना सनं सेमं सोदञ्चं सेमां सोषां सेशे सेदीशे ३४

नू इत्था ते सानो अव्ये वो अस्मे वासौ वेद्यस्याम्
धिष्ण्येमे नू अन्यत्रा चित् पादादौ नू इन्द्रोत्यर्वाक् ३५ ७

उदू अयान्नजेषितं धनर्चं शतर्चसं दशोण्ये दशोण्ये
यथोहिषे यथोचिषे दशोणिं स्वरोदयं पिबा इमं रथोळ्ह ३६

वीरास एतन तमू अकृण्वँस् ततारेव प्रैषयू रोदसीमे
धन्वर्णसः सरपसः सचोत प्रधीव वीळू उत सर्तवाजौ ३७

अश्विनेव पीवोपवसनानां महो आदित्याँ उषसामिवेतयः
स्तोतव अम्ब्यं च सृजा इयध्यै सचेन्द्र सानो अव्यये स्वधामिता ३८

गोओपशागोऋजीकप्रवादौ मनीषा आ त्वा पृथिवी उत द्यौः
मनीषावस्यू रण्या इहाव बृहतीइवेति च यथागृहीतम् ३९

योनिमारैगगादारैग् आरैग्दुर्योण आवृणक्
हन्त्यासद्रुप आरुपितमनायुधास आसता ४० ८

अस्त्वासतो निराविध्यद् अभ्यादेवं क आसतः
न्यावृणङ्ङ्किरादेवो न्याविध्यदेनमायुनक् ४१

अहिहन्नारिणक्पथ आयुक्षातामुदावता
रिक्थमारैग्य आयुक्त कुरुश्रवणमावृणि ४२

शुनश्चिच्छेपं निदितं नरा वा शंसं पूषणम्
नरा च शंसं दैव्यं ता अनानुपूर्व्यसंहिताः ४३

यतो दीर्घस्ततो दीर्घा विवृत्तयो द्विषंधयस्तूभयतःस्वरस्वराः
प्राच्यपञ्चालउपधानिभोदयाः शाकल्यस्य स्थविरस्ये तरा स्थितिः ४४ ९

इति ऋग्वेदप्रातिशाख्ये द्वितीयं पटलम्

अथ तृतीयं पटलम्

उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः
आयामविश्रम्भाक्षेपैस् त उच्यन्तेऽक्षराश्रयाः १

एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः
तस्योदात्ततरोदात्तादर्धमात्रार्धमेव वा  २

अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत्
उदात्तं वोच्यते किञ्चित् स्वरितं वाक्षरं परम्  ३

उदात्तपूर्वं स्वरितमनुदात्तं पदेऽक्षरम्
अतोऽन्यत्स्वरितं स्वारं जात्यमाचक्षते पदे  ४

उभाभ्यां तु परं विद्यात् ताभ्यामुदात्तमक्षरम्
अनेकमप्यनुदात्तं न चेत्पूर्वं तथागतात्  ५   १

उदात्तवत्येकीभाव उदात्तं संध्यमक्षरम्
अनुदात्तोदये पुनः स्वरितं स्वरितोपधे  ६

इकारयोश्च प्रश्लेषे क्षैप्राभिनिहितेषु च
उदात्तपूर्वरूपेषु शाकल्यस्यैवमाचरेत्  ७

माण्डूकेयस्य सर्वेषु प्रश्लिष्टेषु तथा स्मरेत्
इत्येकीभाविनां धर्माः परैः प्रथमभाविनः  ८

उदात्तपूर्वं नियतं विवृत्त्या व्यञ्जनेन वा
स्वर्यतेऽन्तर्हितं न चेदुदात्तस्वरितोदयम्  ९

वैवृत्ततैरोव्यञ्जनौ क्षैप्राभिनिहितौ च तान्
प्रश्लिष्टं च यथासंधि स्वारानाचक्षते पृथक्  १०   २

स्वरितादनुदात्तानां परेषां प्रचयः स्वरः
उदात्तश्रुततां यान्त्येकं द्वे वा बहूनि वा  ११

केचित्त्वेकमनेकं वा नियच्छन्त्यन्ततोऽक्षरम्

आ वा शेषा न्नियुक्तं तूदात्तस्वरितोदयम्  १२

नियमं कारणादेके प्रचयस्वरधर्मवत्
प्रचयस्वर आचारः शाकल्यान्यतरेययोः  १३

परिग्रहे त्वनार्षान्तात् तेन वैकाक्षरीकृतात्
परेषां न्यासमाचारं व्याळिस्तौ चेत्स्वरौ परौ  १४

यथा संधीयमानानामनेकीभवतां स्वरः
उपदिष्टस्तथा विद्यादक्षराणामवग्रहे  १५   ३

पद्यादीँस्तु द्व्युदात्तानामसंहितवदुत्तरान्
जात्यवद्वा तथा वान्तौ तनू शचीति पूर्वयोः  १६

त्रिमात्रयोरुत्तरयोरन्त्यापि प्रचयस्वरे
मात्रा न्यस्ततरैकेषाम् उभे व्याळिः समस्वरे  १७

असंदिग्धान्स्वरान्ब्रूयात् अविकृष्टानकम्पितान्
स्वरितं नतिनिर्हरयान् पूर्वौ नातिविवर्तयेत्  १८

जात्योऽभिनिहितश्चैव क्षैप्रः प्रश्लिष्ट एव च
एते स्वाराः प्रकम्पन्ते यत्रोच्चस्वरितोदयाः  १९   ४

इति ऋग्वेदप्रातिशाख्ये तृतीयं पटलम्

## अथ चतुर्थं पटलम्

स्पर्शाः पूर्वे व्यञ्जनान्युत्तराण्यास्थापितानामवशंगमं तत्
घोषवत्पराः प्रथमास्तृतीयान् स्वानुत्तमानुत्तमेषूदयेषु  १

सर्वैः प्रथमैरुपधीयमानः शकारः शाकल्यपितुश्छकारम्
पदान्तैस्तैरेव तृतीयभूतैस्तेषां चतुर्थानुदयो हकारः  २

विस्याने स्पर्श उदये मकारः सर्वेषामेवोदयस्योत्तमं स्वम्
अन्तस्थासु रेफवर्जं परासु तां तां पदादिष्वनुनासिकां तु ३

तथा नकार उदये लकारे ञकारं शकारचकारवर्गयोः
तकारो जकारलकारयोस्तौ तालव्येऽघोष उदये चकारम् ४

छकारं तयोरुदयः शकारो न शाकल्यस्य ता वशंगमानि
रेफोष्मणोरुदययोर्मकारोऽनुस्वारं तत्परिपन्नमाहुः ५ १

ङकारेऽघोषोष्मपरेऽन्तरैके ककारं टकारनकारयोस्तु
आहुः सकारोदययोस्तकारं ञकारे शकारपरे चकारम् ६

तेऽन्तःपाता अकृतसंहितानामूष्मान्तानां पटलेऽस्मिन्विधानम्
चित्कम्भनेनोष्मलोपः ककुद्मान् सम्राट्शब्दः परिपन्नापवादः ७

विसर्जनीय आकारमरेफी घोषवत्परः
ओकारं ह्रस्वपूर्व स्तौ संधी नियतप्रश्रितौ ८

सर्वोपधस्तु स्वरघोषवत्परो रेफं रेफी तु पुना रेफसंधयः
रेफोदयो लुप्यते द्राघितोपधा ह्रस्वस्या कामनियता उभाविमौ ९

अघोषे रेफ्यरेफी चोष्माणं स्पर्श उत्तरे
तत्सस्थानमनूष्मपरे तमेवोष्माणमूष्मणि १० २

प्रथमोत्तमवर्गीये स्पर्शे वोष्मणि चानते
व्यापन्न ऊष्मसंधिः स विक्रान्तः प्राकृतोपधः ११

ऊष्मण्यघोषोदये लुप्यते परे नतेऽपि सोऽन्वक्षरसंधिर्वक्त्रः
अव्यापत्तिः कखपफेषु वृत्ती रेफं स्वर्धूः पूरघोषेष्वविग्रहे १२

नाद्मा इन्दुः स्वधितीवाह एव भूम्याददेऽहोभिरुषर्वसूयवः

आवर्तमोऽहोरात्र्यारण्यदो पितो प्रचेता राजन्वर्तनीरहेति च १३

यथादिष्टं नामिपूर्वः षकारं सकारमन्योऽरिफितः ककारे
पकारे च प्रत्ययेऽन्तः पदं तु सर्वत्रैवोपाचरितः स संधिः १४

अन्तःपादं विग्रहेऽकारपूर्वः पतिशब्दे द्व्यक्षरे पुंस्प्रवादे
करं कृतं कृधि करत्करित्यपि परेषु पादान्तगते परीति च १५ ३

असोऽन्तोऽरेफवतः पारशब्दे परि कृतानि करतीति चैषु
अपादान्तीयेष्वपि प्रत्ययेषु वास्तोरित्थेतत्पतिशब्द उत्तरे १६

आविर्हविर्ज्योतिरित्युत्तरश्चेत् ककारोऽथो पान्तपश्यन्तिशब्दौ
इळाया गा नमसो देवयुर्द्रुहो मातुरिळस्तानि पदप्रवादे १७

पूर्वः पुरः पूरिति पूर्वपद्यान् पदानि चापोद्य नवैतदेवम्
अस्या यः सोमो बृहतोऽस्य पूर्व्य उरु ज्योतिर्जात इमो वृधोऽन्यः १८

ब्रह्मणो द्वे त्रातर्ऋतो विदुर्वसुः पशुरेतानि कविशब्द उत्तरे
पथिशब्दे जिन्वथश्चेतथोमहः पृथुशब्दे विश्वतो वीळितो रजः १९

कामपोषपूर्धिशब्देषु रायः पादादिरन्तश्च दिवस्परीति च
दिवस्पृथिव्या अधमस्पदीष्ट पूर्वं पादादौ यदि सस्पदीष्ट २० ४

शवसो महः सहस इळायाः पात्वित्येकं पुत्रशब्दे पराणि
रायस्खां महस्करथो महस्परं निष्क्रव्यादं निष्कृथ निष्पिपर्तन २१

कबन्धं म्पृथु कण्वासः पुत्रः पातु पथा पयः
पायुः पृष्ठं पदं तेषां प्रवादा उदये दिवः २२

रजसस्पात्यन्तस्पथाः कस्काव्या चतुरस्कर
स्वादुष्किल निदस्पातु द्यौष्पितर्वसतिष्कृता २३

तपोष्पवित्रं त्रिष्पूत्वी धीष्पीपाय विभिष्पतात्
द्यौष्पिता रजसस्पृष्टो ददुष्पज्राय नस्करः २४

वसुष्कुविन्मनुष्पिता पितुष्पिता पितुष्परि
प्र णस्पुरो मयस्करन् नभस्पयस्त्रयस्परः २५ ५

नकार आकारोपधः पद्यान्तोऽपि स्वरोदयः
लुप्यतेऽज्राञ्जग्रसानाञ्जघन्वान्देवहूतमान् २६

बद्वधानाँ इन्द्र सोमाँस् तृषाणान् नो देव देवान्
हन्त देवाँ इति चैता आन्पदाः पदवृत्तयः २७

विवृत्त्यभिप्रायेषु च पीवोअन्नाँ रयिवृधः
दधन्वां यो जुजुर्वां यः स्ववाँ या तु दद्वाँ वेति २८

हतं योनौ वचोभिर्यान् युवन्यूँर् वनिषीष्टेति
ईकारोकारोपहितो रेफमेषु स्वरेषु च २९

दस्यूँरैको नॄँ रभि च ते स्पर्शरेफसंधयः
नास्मानुपैतावान्स्फुरान् गच्छान् देवानयाड् वहान् ३० ६

हिरण्यचक्रान्मायावान् घोषाँस् तानश्विनाविद्वान्
पयस्वान्पुत्राना धेह्या यजीयान्पतीनुरोः ३१

चरति चक्रे चमसाँश्च चो चिच् चरसि च्यौत्नश्चतुरश्चिकित्वान्
एतेषु सर्वत्र विसर्जनीयवद् दीर्घोपधोऽस्मान् चमसान्पशून्न ३२

ताँस्ते सर्वास्तान्देवाँस्त्वं ताँस्त्रायस्वावदँस्त्वं च
विसर्जनीयं परेष्विति ते स्पर्शोष्मसंधयः ३३

नॄँः पतिभ्यो नॄँः प्रणेत्रं नॄँः पात्रं स्वतवाँः पायुः

संधिर्विक्रान्त एवैष न पाहि शृणुधीति च ३४

नकारस्य लोपरेफोष्मभावे पूर्वस्तत्स्थानादनुनासिकः स्वरः
आदिस्वरश्चोत्तरेषां पदेऽपि माँस्पचन्या माँश्चत्वे मँश्चतोश्च ३५ ७

ईमित्यन्तलोप एषूदयेषु गर्भं गावो वत्सं मृजन्ति पृच्यते
सखायो विव्याच पुना रिणन्ति रथमित्यन्वक्षरसंधिरेव सः ३६

पुरु पृथ्वधि पूर्वेषु शकार उपजायते
ह्रस्वे च पूर्वपद्यान्ते चन्द्रशब्दे परेऽन्तरा ३७

परीति पद्ये कृपरे षकारो वनेति रेफः सदशब्द उत्तरे
परिष्कृणवन्ति वेधसोऽस्कृतोषसं शौद्धाक्षराः संधयः एत उक्ताः ३८

मेधातिथौ वरुणान्तव्रतान्तौ स्पर्शान्तस्थाप्रत्ययौ निर्हसेते
आदित्या देवा वरुणासुरेति येत्यादिषु वयमित्यत्र मित्रा ३९

या सुप्रतीकं निष्कृतं पुरोहितिः क्षत्रं दाशति शवसा भिषज्यथः
सो चिन्वगस्त्ये दशमे च मण्डले सा न्वीयते सः पलिक्नीर्हिषस्तव ४०

जुगुक्षतो दुदुक्षन्गा अदुक्षद् दुक्षन् वृधेऽस्य दुक्षतानु दक्षि
दक्षन्न पत्मन्दक्षुषोऽभि दक्षत् कृष्णासो दक्षि हियानस्य दक्षोः ४१ ८

इति ऋग्वेदप्रातिशाख्ये चतुर्थं पटलम्

## अथ पञ्चमं पटलम्

अन्तःपादं नाम्युपधः सकारः षकारमप्यूष्मपरैर्यथोक्तम्
अन्यैरेकारान् नतिरत्र पूर्वा ततो व्यापत्तिर्भवतीति विद्यात् १

सूती नकिः स्वैर्व्युरु नह्यभि त्री नि हीति स द्व्यक्षरेणैव सत्स्थः
स्वबह्वरेण पदादयश्च स्यिति स्किति स्त्रित्य रेफस्य च स्मिति २

एकारेणापि स्विति नःपरम् चेद् दीर्घो न स्यित्यु च नास्पर्शपूर्वम्
तकारवर्गस्तु टकारवर्गमन्तःपदस्थोऽपि षकारपूर्वः ३

सितां सधस्थात्स्तनिहि स्तवाम स्तवे स्तुवन्ति स्तुहि सीं स्तुत स्थ
साहि स्त स्तुप्सत्सि सत्सत्स्वनीति स्तोभेत्यादिश्चापि बह्वक्षरान्त्यैः ४

नि परीति स्व सीत्यादी चकारवर्गीयोदयौ
दकारे चोत्तरे परान् से स सिति स्वरोदये ५ १

सेव स्वापय सस्वजे सस्वजाते ससाद च
सन्तं सन्तः सन्ति पूर्वी स्थु स्था स्थादिति चोत्तरः ६

हि षिञ्च तू षिञ्च रजःसु षीदन्नितो षिञ्चताभि षतः किमु ष्वित्
सूरिभिष्ष्याम दिवि षन्तु के ष्ठ प्रति ष्फुर त्री षधस्था कमु ष्वित् ७

उ षुवाणो दिवि षन्सूरिभिष्ष्यामृच्छन्ति ष्म नू ष्ठिरं वंसु षीदति
नु ष प्र हि ष्ठो यशसा मही षा वि षा भूयामो षु यति ष्ठनेति च ८

वाजी स्तुतो वहन्ति सीं पतिः स्यां दित्ससि स्तुतः
अपो सु म्यक्ष श्रुधि सु त्रिः स्म स्तुहि स्तुहीति न ९

युग्मान्तस्थादन्तमूलीयपूर्वैरन्तःपदं नम्यतेऽन्तःपदस्थैः
अन्यपूर्वैरपि पद्यादिभाक्सन्ने काररेफपृतनोपधश्च १० २

रेफर्कारर्कारपरः प्रकृत्या सं स्पृक्स्वृ सर्स्वरिति चाक्षराणाम्
सेति चास्य परिपन्नोपधा चेत् संयोगस्य चाप्यनुनासिकादेः ११

सहस्रं सनिता स्थात्रां सावित्रं सूवरी स्नुषे
समुद्रं सदृशा सारे सायकः साधनी सह १२

सनित स्पष्टः सदृशः सखायं सप्तैरेते सानुशब्दश्च पद्याः

सुते सोमे वक्षणेऽप्रामि चर्षणि स्वभिष्टीत्येवमुपधाश्च सर्वे १३

अभिसत्वा रयिस्थानो यासिसीष्ठाः सिसक्ति च
तिस्तिरे तिस्तिराणा च सिसिचे सिसिचुश्च न १४

गोष्ठादिव गोषतमा उपष्टुत् सप्रवादो नार्षदः पर्यषस्वजत्
स्वादुषंसदः पुरुषन्तिशब्दः सुषंसदं सुषमिधानुसेषिधत् १५ ३

तकारे पूर्वपद्यान्तो व्यापन्नोऽरेफसंहिते
नामिपूर्वो विग्रहे तु त्वा त इत्यनुदात्तयोः १६

अग्निरेकाक्षरस्यादौ नकिश्चाथो तनुष्विति
तत्ततन्युस्ततक्षुस्तं तौग्र्यमित्युत्तरेषु निः १७

पायुभिः पर्तृभिस्त्रिभिर् ददिर्वैरस्मयुः शुचिः
उत्तरे त्वमितीयुष्टे वावृधुष्टे सधिष्टव १८

गोभिष्टरेम क्रतुष्टं नाहुर्निष्षिध्वरीः प्रभोः
वन्दारुः षष्टिराविस्त्रिर बाह्वोरित्यानुदात्तयोः १९

ऋकाररेफषकारा नकारं समानपदेऽवगृह्य नमन्ति
अन्तःपदस्थमककारपूर्वा अपि संध्याः संध्य ऊष्माप्यनिङ्ग्ये २० ४

न मध्यमै स्पर्शवर्गैर्व्यवेतं परिप्रऋषीन्द्रादिषु चोत्तमेन
तथा शकारसकारव्यवेतं सर्वादिषु पूर्वपदान्तगं च २१

नाभिनिर्णिक्प्रवादादी यकारस्पर्शसंहितम्
कर्मनिष्ठां दीर्घनीथे भानुशब्दे हिनोमि च २२

ह्रस्वोदयं त्वेषपूर्वेवमादिषु त्रिशु भ्रयुष्मादिषु चोभयोदयम्
अहकारेष्वधिकत्र्यक्षरेषु च पुरःपुनर्दश्चतुर्ज्योतिरादिषु २३

उस्त्रयाम्णोऽनुस्त्रयाम्णो सुषाम्णे वृषमण्यवोऽधिषवण्या प्रण्यः
दूढ्यदूणाशदूळभप्रवादा दुर्दूभूतमक्षरं तेषु नन्तृ २४

अव्यवेत विग्रहे विघ्नकृद्ध्री रेफोष्माणौ सर्वपूर्वौ यथोक्तम्
आनीन्नु त्यं नोनुवुर्नोनुमश्च नयत्यर्थं च प्र परीति पूर्वौ २५ ५

पुरुप्रिया ब्रह्म सुतेषु नेषि प्लुताकारान्तं सषकारमिन्द्र
नते सु स्मेति सवनेषु पर्षि स्वरर्यमा प्रोरु परीति नैर्नः २६

हेळो मुञ्चतं मित्राय राया पूषा गध्यविषच्छकारवत्
नव्येभिस्त्मने वाजान्कृणोत द्वे नय प्रतरं परेषु न २७

गोरोहेण निर्गमाणीन्द्र एणा इन्द्र एणं स्वर्ण परा णुदस्व
अग्नेरवेण वार्ण शक्र एणमेषा नतिर्दन्त्यमूर्धन्यभावः २८ ६

इति ऋग्वेदप्रातिशाख्ये पञ्चमं पटलम्

## अथ षष्ठं पटलम्

स्वरानुस्वारोपहितो द्विरुच्यते संयोगादिः स क्रमोऽविक्रमे सन्
सोष्मा तु पूर्व्येण सहोच्यते सकृत् स्वेना संयोगादिरपि च्छकारः १

परं रेफात् स्पर्श एवं लकाराद् ऊष्मणो वा नावसितं न रेफः
वोष्मा संयुक्तोऽनुपधो न तूष्मा स्वरोष्मपरो न परक्रमोपधा २

सहातिहाय पवमान यस्य द्वे तने चेत्युपहितः पदादिः
छकारो दीर्घेण च मेतिवर्जं संयुक्तं तु व्यञ्जनं शाकलेन ३

पदान्तीयो ह्रस्वपूर्वो ङकारो नकारश्च क्रामत उत्तरे स्वरे
अनादेशे पटलेऽस्मिन् विधानं सर्वत्र विद्यादपि वैकृतानाम् ४

अभिनिधानं कृतसंहितानां स्पर्शान्तस्थानामपवाद्य रेफम्
संधारणं संवरणं श्रुतेश्च स्पर्शोदयानामपि चावसाने ५ १

अन्तस्थाः स्वे स्वे च परेऽपि रक्ता लकार ऊष्मस्वपि शाकलेन
खकारे चैवमुदये ककारः ख्यातेर्धातो रप्शतेर्वा पकारः ६

पदान्तीया यरवोष्मोदयाश्च स्पर्शा पदादिष्ववरे मकारात्
असंयुक्तं शाकलं तन्न पद्ये स्वित्युत्तरे वा त्वनेकाक्षरान्त्याः ७

सर्वत्रैके करणस्थानभेदे वा शाकलं प्रथमे स्पर्शवर्गे
स्पर्शा यमाननुनासिकाः स्वान् परेषु स्पर्शेष्वनुनासिकेषु ८

न स्पर्शस्योष्मप्रकृतेः प्रतीयाद् यमापत्तिं नाभिनिधानभावम्
यमः प्रकृत्यैव सदृक् श्रुतिर्वा यमेन मुख्यास्ति समानकाला ९

अनन्यस्तु प्रकृतेः प्रत्ययार्थे न संयोगं स्वरभक्तिर्विहन्ति
यमान्नासिक्या स्वरभक्तिरुत्तरा गार्ग्यस्योष्मा सोष्मणो वर्जयेत्तम् १०

नादः परोऽभिनिधानाद् ध्रुवं तत् तत्कालस्थानमश्रुति त्वघोषात्
नासिकास्थानमनुनासिकाच्चेद् अन्तस्थायाः पूर्वस्वरूपमेव ११

व्याळेः सर्वत्राभिनिधानलोपः परक्रमस्वररेफोपधे न
सवर्णपूर्वस्य सहध्रुवस्य विपर्ययो ध्रुवशिष्टेऽपरेषाम् १२

रेफात्स्वरोपहिताद् व्यञ्जनोदयादृकारवर्णा स्वरभक्तिरुत्तरा
विच्छेदात् स्पर्शोष्मपराच्च घोषिणो द्राघीयसी तूष्मपरे तरा क्रमे १३

सर्वत्रैके स्वरभक्तेरभावं रेफोपधामपरे विद्यमानाम्
अक्रान्तोष्मप्रत्ययाभावमेके पूर्वोत्तरस्वरसरूपतां च १४

ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्
क्शातौ खकारयकारा उ एके तावेव ख्यातिसदृशेषु नामसु १५ ३

इति ऋग्वेदप्रातिशाख्ये षष्ठं पटलम्

इति प्रथमोऽध्यायः

## अथ सप्तमं पटलम्

दीर्घं ह्रस्वो व्यञ्जनेऽन्यस्त्वृकाराद् यथादिष्टं सामवशः स संधिः
सैव प्लुतिर्या स्वरेषूपदिष्टा योनिमारैगादिषु चोदयादेः १

मद्विवत्युकारः प्लवते सर्वत्राप्यपदान्तभाक्
सुता याहीत्यतोऽन्येषु पदेष्वच्छेति विग्रहे २

अनाकारोपधश्चान्त्यो येत्युत्तरपदस्य यः
उदात्तादेर्व्यक्षरस्य नास्येति व्यञ्जनोपधः ३

नियूय पिष्टतमयाभिपद्य प्रास्य संगत्यानुदृश्याभिवृत्य
आरभ्य संमील्य मक्षुङ्गमाभिरभिव्लग्य यत्र निषद्य वीति च ४

नाहि जह्यभि वीर्येण कृधीति कृणुथेति च
एतान्येकाक्षरे पदे क्षैप्रीभाव्ये पराणि च ५

युक्ष्व मन्दस्व विद्मेति हीति विद्धि पिब त्विति
जुहोत यज धासथ शिशीत भरेति स्विति ६

सु नुहीत्येतेषु परेष्वधेति तृम्पर्तेन मुञ्चताद्येति वीति
सु न्वित्यनर्थपरयोरुकारः पदं तयोरुत्तरे योज घेति ७

मृळयद्ध्वां वसुवित्तमं यत्सोमं जातवेदसम्
भरतेत्येतेष्व पादान्तोऽद्येति करणादिषु ८

करणं च चित्करते वृणीमहे भवतं कृणोतु भवत स्वस्तये
पुर्विति चित्पुरुहूतो नृषूतः सहस्राणि पुरुभुजा धियायते ९

वहेति त्वंदुहितर्दैव्यमुत्तरं द्युम्नं रुद्रं नव्यमेतेषु वर्धय
चिन्महित्वंगीर्भृगृणानः सतेपरं न्वित्यन्त्ये चेन्मर्तशब्दाद्रिवःपरे १० २

तूतुजानो मतिभिर्भोजनानि नो दद्धि स्तोमं भूरि योनिं त्वमेषु
भरेत्येतन् न नु चिद्यो भवेति स्तोतृभ्यो द्युम्नी शत मे परेषु ११

शोचा यविष्ठ्यैवा यथा कर्ता यत्सादया सप्त
अर्चा मरुद्भिस्तिष्ठा नः सना स्वः पारया नव्यः १२

बोधा स्तोत्रे चकृमा ब्रह्मवाहः शंसा गोषूच्छा दुहितर्वदा तना
अजा नष्टं जम्भया ता अधा महो गन्ता मा युन्वा हि सृजा वनस्पते १३

अग्ने रक्षा णस्तिष्ठा हिरण्ययं सोता वरेण्यं शोचा मरुद्वृधः
शिक्षा स्तोतृभ्यो भूमा त्रिवन्धुरः पिबा मधूनां सोता परीति च १४

सक्ष्व मिमिक्ष्व दधिष्व वसिष्व श्रोत सुनोत हिनोत पुनात
विद्म जगृभ्म ररभ्म ववन्म क्षाम सुपप्तनि मन्थत मत्स्व १५ ३

सर रद रण जिन्व धारयार्ष क्षर यज यच्छ दशस्य साध सेध
तप रुज मृळ वर्ध यावयात्र श्रवय नमस्य विदाष्ट कृष्व जोष १६

शृणुधि शृणुत यन्त यच्छत स्तव सिम गूहत कुत्र मोषथ
दिधृत पचत वृश्च विध्यताथ मदथात्त यदीत पाथन १७

उपागत्याख्खलीकृत्य वव्राजाविष्टनोरुष्य
इष्कर्तेळिष्व मर्मृज्म बिभयेयर्त तच्छतम् १८

सार्धमद्यादिभिः प्लुतैः पादादौ व्यञ्जनोदयम्
न्वेववर्जं न संयोगे शेषे चापठिते सति १९

वर्ध शुभ्रे रुज यः सेध राजन् वह हव्यानि यदि मेऽध यामनि
विद्म दातारमध धारयाध यदध ते विश्वं पुरु वार्च गाय २० ४

वह वायो पिब मध्वः पुरु विश्वान्यध वायुं पुरु शस्त

यदि भृत्योरध जिह्वा पुरु विश्वा पिब शुद्धं पिब राये वह कुत्सम् २१

भरद्वाजेऽर्च देवाय यदि वा पुरु दाशुषे
बह शुष्णायाध बह्वध यत्पुरु हीति न २२

कृधीति परेषु सहस्रसां धियं जरित्रे न इति तत्रेति चान्त्ये
सहस्येन सुश्रवसं पवस्व द्वे नो अधीत्येषु परेषु तेन २३

देवं वेनं केतमित्युत्तरेषु दधातेति श्रुधि वंस्वेति नःपरे
वेदेति विश्वस्यभूमंमउत्तर शुनःशेपे च प्लवते यकारे २४

ब्रह्मेति नो द्वे च गिरः कृणोति ते कृणोत तूतोदिति चोत्तरेषु
अभीति नो नु नवन्ते सतो नरं द्वा सत्स्वित्याग्नेऽर्षपरे तु मुख्ये २५ ५

चक्रुर्वदेते दशस्यन्समुद्रो रथेन नः सप्तऋषीन्मदन्ति
ते वो भयन्ते नियुद्भिः कृपीटं रथस्य सोमस्य मती रणन्ति २६

समुद्रं द्वे स्वर्ण नवग्वशब्दो दशग्वं दंसिष्ठ वसूनि नो वसु
वृत्रं निर्द्वे नु यतिभ्यः सहन्तः पृथिव्यां निर्हंसि समत्सु पावक २७

यत्रेति चक्रुरादिषु नरः सुपर्णा इति च
समुद्रादिषु येनेति तत्रेति मे सदो रथम् २८

अवेति नो नु कल्पेषु नूनं वाजेषु पृत्सुषु
आद्ये चेद्वाजयुंपार्येकमग्नेमघवन्परे २९

रास्वा पितः शतेना नो वर्धस्व सु श्रुधी हवम्
मन्दस्वा सु वहस्वा सु वनेमा ते नही नु वः ३० ६

पाथा दिवो धाता रयिं सृजता गयसाधनम्
रास्वा चोरू न शग्धी नः सृजता मधुमत्तमम् ३१

जही चिकित्वो वेत्था हि रक्षथा न हता मखम्
युयोता शरुं स्वेना हि वनेमा ररिमा वयम्  ३२

प्रप्रा वो अस्मे धामा ह सना ज्योतिरपा वृधि
ऋध्यामा ते वामदेवे जुहोता मधुमत्तमम्  ३३

यद्धवा महे धिष्वा शवो जनिष्वा देववीतये
अधा त्वं ह्यद्याद्या श्वःश्वः सचस्वा नः स्वस्तये  ३४   ७

इति ऋग्वेदप्रातिशाख्ये सप्तमं पटलम्

## अथाष्टमं पटलम्

अन्तःपादं विग्रह एष्वपृक्त उकारो व्रजस्य सु घा नमोभिः
शुचिं पवित्रं तु महीर्नु चाप्लुतं सुतस्येति यद्युदयोदया न  १

सोमसुतिं चकिंराम स्तवाम स्तवाना गृभाय रथं श्रुधीति
ते अस्ति ते महिमनः प्र वोचत प्र वोचं नः सुमना द्वैपदाश्च  २

महे दधिध्वं तिर मुञ्च नो मृधश् चर नमध्वं नम ते नयन्त
स्वित्येतेष्वे काक्षरयोः पराणि चेदुपेन्द्राग्नेऽत्राध्वरमायुरेत्विति  ३

सदेत्येतद्योनिषुपीतयेपरं धन्वेत्येतत्सोम राट् पूयमानः
यदीति कृथो मनसः कवीनां सबन्धवो गोः सरमेति तेषु  ४

चरेति पुष्टिं सोम चर्षणिप्रा जनिमेति हन्ति सं जातवेदाः
रन्धयेति येषुकंशासदुत्तरं न नःकारे स्वित्युपसातयेपरे  ५   १

महयात्र जय काव्येन गूर्धय भरेति च स्वरिति प्रत्यये षट्
मद पर्षं पिपृत धन्व यच्छत रुहेमेति स्वस्तयउत्तराणि  ६

दधिम मदत तन्वि सिञ्चत स्तव वदतानज रक्षतोक्षत
पिपृत पृणत पृच्छत प्रुष स्थ घ हिनवाय जुहोत पश्यत  ७

चकृमाकुत्र भूम स्म शिशीत स्तोत पप्तत
यथोदयानि सर्वाणि त्विति चैकाक्षरोपधम् ८

कदा हरिवो वरुणस्य चक्रतुः सूर्यस्य निष्टया इव भूम तेषु न
वस्त्राणि हि बाबधे यज्ञियानां ते दंसो द्वे नः स च शक्र तेषु तु ९

चकृमेति द्वैपदे भूरि दुष्कृतं वर्धतां विप्रवचसो जिह्वयेति
काण्वायना निष्कृतीरेतयो स्थ जाताः सुरथा हवनश्रुतश्च १० २

सवापरं धेति न कौत्सवैमदं स्म राशिमित्यादिषु न प्रति ष्म च
स्म ते परेषु व्रजनं वनस्पते शुभे परुष्ण्यां स्म पुरा वृषाकपौ ११

राशिं वाजेषु मे सद्म पूषणं तं तृंहद्धायि मा दुर्हणायतः
यस्मै यद् वृत्रहत्येषु मावते वातो यं यस्य मद्दुर्गृभीयसे १२

पृच्छा विपश्चितमवा पुरंध्या घा त्वद्रिग्वीरान्वनुयामा त्वोताः
जनया दैव्यं भुजेमा तनूभिर् हा वहतो वासया मन्मना च १३

वेदा वसुधितिं रोमा पृथिव्या वोचा सुतेषु धावता सुहस्त्यः
मुञ्चा सुषुवुषः स्वाद्मा पितूनामिहा वृणीष्व बोधया पुरंधिम् १४

अवथा स कृणुथा सुप्रतीकं तिरा शचीभिः कृणुता सुरत्नान्
ग्मन्ता नहुषोऽनयता वियन्तः स्मा च्यावयन्नीरया वृष्टिमन्तम् १५ ३

असृजता मातरं सू रथं हुवे नयता बद्धं स्वापया मिथूदृशा
इता जयता गता सर्वतातय ईरयथा मरुतो नेषथा सुगम् १६

अन्यत्रा चित्पिबता मुञ्चनेजनं घा स्या वोचेमा विदथेष्विता धियम्
इता नि यत्रा वि दशस्यथा क्रिविं चा बोधाति द्रावया त्वं किरा वसु १७

हा पदेव कर्तना श्रुष्टिं योधया च जग्रभा वाचम्

पायया च तर्पया कामं गातुया च मन्दया गोभिः १८

घा स्यालादेनां सुमतिं वोचा नु व्यथया मन्युम्
नेथा च चक्रा जरसं भवता मृळयन्तश्च १९

एवा चन भजा राये ररिमा ते भजा भूरि
श्रुधी न उभयत्रा ते भजा त्वं मृळया नश्च २० ४

एकादशिद्वादशिनोर् लघावष्टममक्षरम्
उदये संहिताकाले नःकारे च गुरावपि २१

दशमं चैतयोरेवं षष्ठं चाष्टाक्षरेऽक्षरम्
व्यूहैः संपत्समीक्ष्योने क्षैप्रवर्णैकभाविनाम् २२

न वावृधन्त वातस्यावद्यानि जिघांससि
सासह्याम ववृत्याम दीदिह्यष्टममूर्णुहि २३

पुरुप्रजातस्याभि नः कृणुहि द्व्यक्षरोपधम्
हर्यश्वोत भवन्त्विन्द्र सदनायास्ति नाम चित् २४

चमसां इवाव्रि वसवान द्वादशिनः सृजास्य विमदस्थ
सुमखाय धारय ददातु रक्ष धिया दधातु दिधिषेय २५ ५

अङ्ग सरस्वति पञ्च चरन्ति ग्नाभिरिहेन्वसि रणयसि धाव
विद्धि षु णोऽभि षतः सुविताय त्वा समिधान दधीमहि देव २६

जामिषु जासु चिकेत किरासि स्मस्युप पात्यसि सोम शतस्य
आयुषि चेतति विष्टपि मास्व प्रोश्मसि मूर्धनि सद्म वरन्त २७

प्रदिवि वरुण तमसि तिरसि घृतमिव दिवि मम हि नु विशः
उषसि पृथिवि रजसि वहसि हनति पितरि वि विहि नि मधु २८

सहस्त्राणि श्रोमतेनासनाम च्छायामिवेषणयसि सस्तु पाहि
गोपीथ्याय पवमानो वसन्तान् सख्याय वोचेमहि मानुषस्य २६

श्राव्य भूमेति पादान्तौ व्यञ्जनेषु श्रुधी हवम्
सद्मा होता स्मा सनेमि धर्मा सं भूषता रथः ३० ६

इति ऋग्वेदप्रातिशाख्येऽष्टमं पटलम्

अथ नवमं पटलम्

सर्वत्र पूर्वपदान्ताः प्लवन्ते वसुमघयोः परयो रवे तुवि
विश्व विभ्व धन्व स्थर्ति शत्रु द्युम्न यज्ञेति सहतौ प्र चाप्लुते १

सहप्रवादा उदयास्तमान्ताः पर्यभ्यपापीति वृतावृवण
अभीवर्तः सूयवसो रथीतमः पुरूतमोऽनन्तरर्धर्च उत्तमः २

कवर्दु धान्य मिथु चर्षणि स्तन पिबेति सर्वत्र यथोदयं च
त्विष्युक्थेत्येता उदये मकारे पर्युर्वन्नेत्यमकारेऽनुनासिके ३

पित्र्य माहिनाकृषि भङ्गुराश्व विश्व विश्वदेव्य भेषज तुग्र्य पस्त्य
सुम्नर्तारातीत्युदये वकारे वैभ्वादयश्च पृशनादयस्तु १४

यकारेऽराति कवि सुक्रतु श्रुघि पितु सुम्न रय्यृताश्वेति चैते
न त्वश्व सुम्नर्त वृषेति पद्या एकाक्षरादा उदये यकारे ५ १

पृशनाजिरर्जु मधु पुत्रि जनि क्रतु वल्गु वन्धुर वृकाङ्कु दम
वृजिनाध्वरीषु वृष मध्य सखि स्तभु दुच्छुनाद्य यवि शत्रु वसु ६

वैभु ह्रादुनि पुष्ट पर्वताहुति शुभ्र हृदयामति सह वृष्णय शक्ति
सप्ति स्वधिति कृशन वयुनर्ण घृणि हित घित विषु सुतर्त्विय नीथ ७

नर्तवाकेनाश्ववित्सुम्नयन्ता वसुवसु प्रसहानोऽभिवावृते
परिवृतं नाभिवृत्याश्ववच्च पादान्ते सर्वत्र परे मघस्य ८

अश्वयूपायाश्वयुजोऽश्वयोगाः सहवाहः सुम्नयन्तर्तयन्त
सहवसुं सहवत्सर्तयुक्तिं सहवीरं वयुनवच्चकार ९

सुम्नायुर्जुह्व ऋतायन्नृतायुमुग्रादेवं दक्षिणावानृतायोः
वृषारवाय सूमयं शतावन्नपीजृवारीवृतोऽनपावृत् १० २

इन्द्रावतः सोमावतीमवायती दीर्घाधियोऽमित्रायुधो रथीतरः
अन्नावृधं विश्वापुषं वसुजुवं विश्वाभुवे यज्ञायते घृतावृधा ११

सुम्नायन्निन्मित्रायुव ऋषीवो देवावान्दिवः
एवावदस्य क्षेत्रासाम् ऋताव्ने सदनासदे १२

पदेष्वन्तरनिङ्ग्येषु प्लुतिः पद्येषु चोत्तरा
वृषस्व वन्थ वृद्ध्वांसं वाता वातुर्वनो वृतुः १३

वृते वृषाणा वृषाणो वृजे वन्धि मृजुर्मृशुः
मृजे मृजीत वानैषां व मेति सदृशादिषु १४

सहेत्यादिः पूर्वपदोपधः सन्नेकाक्षरचर्षणिधन्ववर्जम्
न तु पादस्याष्टिनोऽन्तं गतस्य न द्वादशिनोऽनभिमातिपूर्वः १५ ३

अभिमातिनृपृतनोपधस्तु सर्वत्र परे प्लवते यकारे
आयवादीनामुदयास्त्रिवर्णाः पदैकदेशा इति तान्प्रतीयात् १६

आयव यावय च्यावय यामय रामय मामह वावस
द्रावय दादृह वावृध तातृष सासह ररप १७

आद्यक्षरं प्लुतं तेषामनन्वित्यस्य मध्यमम्
द्विवर्णः प्रत्ययोऽन्त्यस्य प्रवादाः षळितः परे १८

दूणाश उक्थशासश्च कारान्तश्च दाधृषिः

पादान्तेऽपद्यः सादनमर्धर्चान्ते तु पूरुषः  १९

दोषामस्मै राजतोऽक्रन्वनस्पतीन् महीयमानां कति तुभ्यमेभ्यः
उषासमित्युत्तरं सर्वदेश्यं पादस्य चैकादशिनो यदन्ते  २०   ४

यवयुररमयः ससाहिषे ववृधन्तो रमया गिरा ररम्म
यवयसि ततृषाणमोषति श्रवयन्तोऽददृहन्त ते नृषह्ये  २१

श्रवयतं वाजसातौ नृसह्ये विभ्वासहं दूणशा रोचनानि
न ततृषाणो यमयो ररप्शे पुरुषीणां यवयन्त्विन्दवश्च  २२

ररक्ष यवय स्तेनं ससाहे यवया वधम्
परमया द्रवयन्त श्रवयन् ररते च न  २३

साह्वांसो वः सत्रासाहं सादन्यं सत्यं तातान
नानाम श्रूयाः शुश्रूया रीषन्तं गातूयन्तीव  २४

वावर्त येषां रीषतोऽदकारे सान्त्यभि नृषाहमपूरुषघ्नः
सान्ति गुहा तन्वं रीरिषीष्ट जानि पूर्व्योऽभीवृतेव श्रथाय  २५   ५

साहन्साहा जर्हृषन्त प्रसाहं नक्तोषासा सूर्यमुषासमग्निम्
परिरापः सूनृते जारयन्ती शुश्रूयातं युयुविः सादना ते  २६

करन्सुषाहा घृतवान्ति साह्वानृजूयेव सूयवसाद् वृषाय
उषासानक्ता पृथुजाघने च राथ्यभी रीरिषत ग्लापयन्ति  २७

अध्वानयद्रीरिषत्प्रावणेभी रथायन्तीवादमायः ससाहे
सासाह यूयुधिरिवाश्रथायः पुरुषघ्नं रीरिषः पूरुषादः  २८

अपूरुषं जाहृषाणेन रीषत ऋतायुभी रथीनां साहिषोमहि
पवीतारः कियात्ये पूरुषत्वत ऋतावरीरिव हव्यानि गामय  २९

वृषायस्व प्रसवीता ससाहिषे तातृपाणा तातृपिं सादनस्पृशः
साह्यामेयान्ति पशुमान्ति जागृधुः पवीतारं सूर्यमुषासमीमहे ३० ६

इति ऋग्वेदप्रातिशाख्ये नवमं पटलम्

## अथ दशमं पटलम्

क्रमो द्वाभ्यामभिक्रम्य प्रत्यादायोत्तरं तयोः
उत्तरेणोपसंदध्यात् तथार्धर्चं समापयेत् १

एकवर्णमनोकारं नते सु स्मेति नःपरे
पदेन च व्यवेतं यत् पदं तच्च व्यवायि च २

ईं लुप्तान्तं प्लुतादीनि स्कम्भनेनेति लुप्तवत्
इतो षिञ्चतावर्तमः पूर्वे द्वैपदयोर्द्वयोः ३

स्वसारमस्कृतेत्युभे परं वीरास एतन
अतीत्यैतान्यवस्यन्ति प्लुतादिप्रभृतीनि च ४

पूर्वोत्तरकृतं रूपं प्रत्यादानावसानयोः
न ब्रूयात् सर्वमेवान्यद्यथासंहितमाचरेत् ५ १

अवगृह्यारायतिक्रम्य सहेतिकरणानि च
घन्विघुन्विप्रवादौ च विकृतादी प्लुतादि च ६

अन्तःपदं च येषां स्याद् विकारोऽनन्यकारितः
एतानि परिगृह्णीयाद् बहुमध्यगतानि च ७

अर्धर्चान्त्यं च नाकारं प्रागतोऽननुनासिकम्
प्रत्यादायैव तं ब्रूयादुत्तरेण पुनः सह ८

उपस्थितं सेतिकरणं केवलं तु पदं स्थितम्
तत्स्थितोपस्थितं नाम यत्रोभे आह संहिते ९

अष्टृटवर्गे प्रथमे चोदकः स्यात्प्रदर्शकः
एतदिष्टं समासाँस्तु पुनर्वचन इङ्गयेत् १० २

इतिपूर्वेषु संधानं पूर्वैः स्वः स्यादसंहितम्
तदवग्रहवद् ब्रूयात् संधिर्नार्धर्चयोर्भवेत् ११

दृष्टक्रमत्वात्समयान् संदध्यात्सर्वशः क्रमे
पदेन च पदाभ्यां च प्रागवस्येदतीत्य च १२

नकारस्योष्मवद्वृत्तं प्लुतोपाचरिते नतिः
प्रश्लेषश्च प्रगृह्यस्य प्रकृत्या स्युः परिग्रहे १३

शौद्धाक्षरागमोऽऽपैति न्यायं यान्त्युत्तरे त्रयः
रिफितान्यूष्मणोऽघोषे दूभावः स्वधितीव च १४ ३

इति ऋग्वेदप्रातिशाख्ये दशमं पटलम्

अथैकादशं पटलम्

अथार्ष्यलोपेन यदाह स क्रमः समानकालं पदसंहितं द्वयोः
अथो बहूनामविलोपकारणः परैरवस्यन्त्यतिगम्य कानिचित् १

अपृक्तमेकाक्षरमद्वियोनि यत् तदानुनासिक्यभयादसीयते
नतं च पूर्वेण परस्य कारणं नतेः परस्योभयहेतुसंग्रहात् २

परीत इत्युत्तरमेतयोर्द्वयोः परं हि पूर्वं नमतीत्यतीयते
ततोऽपरे संध्यमवेक्ष्य कारणं तदर्थजं द्विक्रममत्र कुर्वते ३

तमःपरं रेफनिमित्तसंशयात् तथावरित्येतदपोह्यते पदम्
अदो पितो सो चिदुषर्वसूयवो न धक्षि धुक्षीत्यपि चातियन्ति किम् ४

स्वसारमित्येतदपोह्यते पदं परः सकारोपजनोऽस्कृतेति च
निरस्कृतेति ह्युपसर्गकारितस् तदन्वयादाचरितं तु पञ्चभिः ५

सहेति चेमेति च रक्तसंहितम् गुणागमादेतनभावि चेतन
पदं च चास्कम्भ चिदित्यतः परं प्लुतादि चैतानि निमित्तसंशयात् ६ १

द्व्यभिक्रमं पूर्वनिमित्तमानिनस् त्रिषूत्तमेष्वाहुरनन्तरं हि तत्
अनन्तरं त्वेव चतुर्थषष्ठयोः परं कथं तत्र च न द्व्यभिक्रमम् ७

अनानुपूर्व्ये पदसंध्यदर्शनात् पदव्यवेतं च पदं व्यवायि च
ततोऽपरे द्विक्रमम हुराश्रयात् कृताविलुप्तात्रे हि वर्णसंहिता ८

पदानुपूर्व्येण सपूर्व आ ततस्ततो व्यवेतं च सह व्यवायि च
ततो निराहेतरयोश्च ते पदे ततोऽव्यवेतेन परस्य संहिता ९

अनन्तरे त्रिक्रमकारणे यदि त्रिभिश्च गार्ग्यः पुनरेव च त्रिभिः
त्रिसंगमे पञ्चभिरार्ष्यनुग्रहश चतुःक्रमस्त्वाचरितोऽत्र शाकलैः १०

अलोपभावादपरे बहुक्रमं प्रतिस्वमार्षीति न कुर्वते क्वचित्
असर्वशस्त्रिप्रभृतिष्वनेकशः स्मरन्ति संख्यानियमेन शाकलम् ११

अयावने पूर्वविधानमाचरेद् यथापदं संधिमपेतहेतुषु
अथो पदाभ्यां समयं पदेन च क्रमेष्ववस्येदतिगम्य संदधत् १२ २

सहेतिकाराणि समासमन्तभाग् बहुक्रमे मध्यगतानि यानि च
तृतीयतां गच्छति यस्य सोष्मधानानन्ययोगं विकृतं प्लुतादि च १३

अतीत्य तेषां पदतां प्रदर्शयेत् कृते तु गार्ग्यस्य पुनस्त्र्यभिक्रमे
अदृष्टवर्णे प्रथमे प्रदर्शनं स्मरन्ति तत्त्वत्र निराह चोदकः १४

पदं यदा केवलमाह सा स्थितिर यदेतिकारान्तमुपस्थितं तदा
अथो विपयस्य समस्य चाह ते यदा स्थितोपस्थितमाचरन्त्युत १५

पुनर्ब्रुवँस्तत्र समासमिङ्गयेत् स्वरित्यतोऽन्येषु च संधिमाचरेत्

अवग्रहस्येव हि कालधारणा परिग्रहेऽस्तीत्युपधेत्यनुस्मृता १६

अभिक्रमेतोभयतोऽनुसंहितं ततोऽस्य पश्चात्पदतां प्रदर्शयेत्
यथापदं वान्यतरेण संदधत् त्रिषूत्तमेष्वेतदलोपसंभवात् १७

अरक्तसंध्येत्यपवाद्यते पदं पुनस्तदुक्त्वाध्यवसाय पूर्ववत्
तथा यदृच्छोपनते बहुक्रमे क्रमेत तस्यैकपदानि निःसृजन् १८ ३

नकारलोपोष्मरभावमानयेदपेतरागां प्रकृतिं परिग्रहे
नतिं प्लुतोपाचरिते च यत्र च प्रगृह्यमेकीभवति स्वरोदयम् १९

प्रवादिनो दूणाशदूढ्यदूळभान् परेष्वघोषेषु च रेफमूष्मणः
महाप्रदेशं स्वधितीव चानयन् नुदेच्च शौद्धाक्षरसंध्यमागमम् २०

अभिक्रमे पूर्वविधानमाचरेत् पुनर्ब्रुवँस्तूत्तरकारितं क्रमे
विकारमन्यद्यदतोऽनुसंहितं तदाचरेदन्तगताद्ययोस्तु न २१

सकृद्यथासंहितमेषु वाचरेत् पुनर्विवक्षन्पदमप्यसंदधत्
परिग्रहे संधिषु कारणान्वयादविक्रमं द्व्यूष्मसु चोष्मसंधिषु २२

समानकालावसमानकारणावनन्तरौ वा यदि संनिगच्छतः
पदस्य दोषावथ हेत्वसंग्रहे नियुक्तमार्ष्यन्यतरेण लुप्यते २३

मकारलोपे विकृतस्वरोपधे तृतीयभावे प्रथमस्य च ध्रुवम्
विपर्ययो वेतरथाभ्युपेयुषामथोभयेषामनुनासिकोदये २४

अथो नतेनोपहितेऽनूनासिके तथाक्षरस्य क्रम एकपातिनः
न चात्र पूर्वः स्वरितेन संहितां लभेत तस्मिन्नियतस्वरोदये २५ ४

यदा च गच्छत्यनुदात्तमक्षरं वशं पदादेरुदयस्य तेन च
उदात्तपूर्वे नियतस्वरोदये परो विलोपऽविलोपोऽनियतो यदावरः २६

स्वरैकदेश स्वरितस्य चोत्तरं यदा निहन्यादनिमित्तमक्षरम्
उदात्तपूर्वोऽप्यनुदात्तसंगमो यदा स्वरौ द्वौ लभतेऽपि वा बहून् २७

यथा प्रक्लृप्ते स्वरवर्णसंहिते तयोस् तयोरक्षरवर्णयोस्तथा
अदर्शनेऽनार्ष्यविलोप उच्यते क्रमेष्वनार्षं ब्रुवतेऽपरे स्वरम् २८

अदृष्टमार्ष्यां यदि दृश्यते क्रमे विलोपमेवं ब्रुवतेऽपरे तथा
स करणान्यार्ष्यविलोपविक्रम क्रमेण युक्तोऽपि बहूनि संदधत् २९

पदं पदान्तश्च यदा न गच्छति स्वरावसानं स तु योऽत्र युज्यते
तदा न रूपं लभते निराकृतं न चेन्निराहोपनिवृत्य तत्पदम् ३०

स्थितिस्थितोपस्थितयोश्च दृश्यते पदं यथावद्व्ययवद्ध्युपस्थिते
क्वचित्स्थितौ चैवमतोऽधि शाकलाः क्रमे स्थितोपस्थितमाचरन्त्युत ३१

क्रमेत सर्वाणि पदानि निर्ब्रुवन्निति स्मरन्त्या चरितं तु नोत्क्रमेत्
क्रमस्य वर्त्म स्मृतिसंभवौ ब्रुवन् समाधिमस्यान्वितराणि कीर्तयेत् ३२

यथोपदिष्टं क्रमशास्त्रमादितः पुनः पृथक्त्वैर्विविधैर्न साधुवत्
इति प्र बाभ्रव्य उवाच च क्रमं क्रमप्रवक्ता प्रथमं शशंस च ३३

क्रमेण नार्थः पदसंहिताविदः पुराप्रसिद्धाथयपूर्वसिद्धिभिः
अकृत्स्नसिद्धश्च न चान्यसाधको न चोदयापायकरो न च श्रुतः ३४

असिध्यतः सिद्धिविपर्ययो यदि प्रसिध्यतोऽसिद्धिविपर्ययस्तथा
सहापवादेषु च सत्सु न क्रमः प्रदेशशास्त्रेषु भवत्यनर्थकः ३५

विपर्ययाच्छास्त्रसमाधिदर्शनात् पुराप्रसिद्धेरुभयोरनाश्रयात्
समभ्युपेयाद् बहुभिश्च साधुभिः श्रुतेश्च सन्मानकरः क्रमोऽर्थवान् ३६

ऋते न च द्वैपदसंहितास्वरौ प्रसिध्यतः पारेणकर्म चोत्तमम्

क्रमा दतोऽप्यृग्यजुषां च बृंहणं पदैः स्वरैश्चाध्ययनं तथा त्रिभिः ३७ ६

इति ऋग्वेदप्रातिशाख्ये एकादशं पटलम्

अथ द्वादशं पटलम्

ऊष्मान्तस्थसोष्मचकारवर्गा नान्तं यान्त्यन्यत्र विसर्जनीयात्
ऋकारल्कारौ परमर्धमूष्मणां नादिं तकारादवरे च सप्त १

नान्योन्येन मध्यमा स्पर्शवर्गाः संयुज्यन्ते न लकारेण रेफः
स्पर्शैर्वकारो न परैरनुत्तमैस् तथा तेषां घोषिणः सर्वथोष्मभिः २

नान्त्यान्तस्था न प्रथमोष्मभिः परैर् न रेफो रेफेण न सोष्मणोष्मवान्
न स्पर्शैरूष्मा प्रथमः परः सन् नानुत्तमैः स च सोष्मा च पूर्वौ ३

नानुत्तमा घोषिणोऽघोषिभिः सह स्पर्शै स्पर्शा नोत्तमा ऊष्मभिः परैः
लकारस्पर्शैर्न यकार उत्तरैरूष्माणोऽन्योन्येन च नर्क् पदेष्विदम् ४ १

नामाख्यातमुपसर्गो निपातश् चत्वार्याहुः पदजातानि शाब्दाः
तन्नाम येनाभिदधाति सत्त्वं तदाख्यातं येन भावं सधातु ५

प्राभ्या परा निर्दुरनु व्युपाप सं परि प्रति न्यत्यधि सूदवापि
उपसर्गा विंशतिरर्थवाचकाः सहेतराभ्यामितरे निपाताः ६

विंशतेरुपसर्गाणामुच्चा एकाक्षरा नव
आद्युदात्ता दशैतेषाम् अन्तोदातस्त्वभीत्ययम् ७

क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्
सत्त्वाभिधायकं नाम निपातः पादपूरणः ८

निपातानामर्थवशान्निपातनाद् अनर्थकानामितरे च सार्थकाः
नेयन्त इत्यस्ति संख्येह वाङ्मये मिताक्षरे चाप्यमिताक्षरे च ये ९ २

इति ऋग्वेदप्रातिशाख्ये द्वादशं पटलम्

इति द्वितीयोऽध्यायः

अथ त्रयोदशं पटलम्

वायुः प्राणः कोष्ठ्यमनुप्रदानं कण्ठस्य खे विवृते संवृते वा
आपद्यते श्वासतां नादतां वा वक्त्रीहायामुभयं वान्तरोभौ १

ता वर्णानां प्रकृतयो भवन्ति श्वासोऽघोषाणामि तरेषां तु नादः
सोष्मोष्मणां घोषिणां श्वासनादौ तेषां स्थानं प्रति नादात्तदुक्तम् २

तद्विशेषः करणं स्पृष्टमस्थितं दुष्पृष्टं तु प्राग्घकाराच्चतुर्णाम्
स्वरानुस्वारोष्मणामस्पृष्टं स्थितं नैके कण्ठ्यस्य स्थितमाहुरूष्मणः ३

प्रयोक्तुरीहागुणसंनिपाते वर्णीभवन्गुणविशेषयोगात्
एकः श्रुतीः कर्मणाप्नोति बह्वीर् एके वर्णाञ्छाश्वतिकान्न कार्यान् ४

आहुर्घोषं घोषवतामकारमेकेऽनुस्वारमनुनासिकानाम्
सोष्मतां च सोष्मणामूष्मणाहुः सस्थानेन घोषिणां घोषिणैव ५ १

अत्रोत्पन्नावपर ऊष्मघोषौ शीघ्रतरं सोष्मसु प्राणमेके
रक्तो वचनो मुखनासिकाभ्याम् एतद्वर्णात्मगुणशास्त्रमाहुः ६

नपुंसकं यदूष्मान्तं तस्य बह्वभिधानजः
अनुस्वारो दीर्घपूर्वः सिष्यन्तेषु पदेषु सः ७

सः सा सौ सं षदान्तेभ्यः पूर्वोऽनाम्युपधस्तथा
यकारो वा वकारो वा पुरस्ताच्चेदसंधिजः ८

जिघांसन्पांसुरे मांसं पुमांसं पौंस्यमित्यपि
पदेष्वेवंप्रवादेषु नामकार उपोत्तमे ९

प्रश्लिष्टादभिनिहितान् मांश्चत्वेऽयांसमित्यपि

एतावानृद्ध्वनुस्वारो दीर्घादि तरथेतरः १० २

समापाद्यान्युत्तरे षट् पकारे राधो रथो ग्ना दिवो जा ऋतश्च
अञ्जःपा दुःप्रेति च पूर्वपद्यावनिङ्गयन्विक्रममेषु कुर्यात् ११

समापाद्यं नाम वदन्ति षत्वं तथा णत्वं सामवशाँश्च संधीन्
उपाचारं लक्षणतश्च सिद्धमाचार्या व्याळिशाकल्यगार्ग्यः १२

ह्रस्वामर्धस्वरभक्त्यासमाप्तामनुस्वारस्योपधामाहुरेके
अनुस्वारं तावतैवाधिकं च ह्रस्वोपधं दीर्घपूर्वं तदूनम् १३

रेफोऽस्त्यृकारे च परस्य चार्धे पूर्वे ह्रसीयाँस्तु न वेतरस्मात्
मध्ये स तस्यैव लकारभावे धातौ स्वरः कल्पयताव्लृकारः १४ ३

अनन्तस्थ तमनुस्वारमाहुर् व्याळिर्नासिक्यमनुनासिकं वा
संध्यानि संध्यक्षराण्याहुरेके द्विस्थानतैतेषु तथोभयेषु १५

संध्येष्वकारोऽर्धमिकार उत्तरं युजोरुकार इति शाकटायनः
मात्रासंसर्गादवरेऽपृथक्श्रुती ह्रस्वानुस्वारव्यतिषङ्गवत्परे १६

त्रीणि मन्द्रं मध्यममुत्तमं च स्थानान्याहुः सप्तयमानि वाचः
अनन्तरश्चात्र यमोऽविशेषः सप्त स्वरा ये यमास्ते पृथग्वा १७

तिस्रो वृत्तीरुपदिशन्ति वाचो विलम्बितां मध्यमां च द्रुतां च
वृत्त्यन्तरे कर्मविशेषमाहुर् मात्राविशेषः प्रतिवृत्त्युपैति १८

अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम्
शिष्याणामुपदेशार्थे कुर्याद् वृत्तिं विलम्बिताम् १९

चाषस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत्
शिखी त्रिमात्रो विज्ञेय एष मात्रापरिग्रहः २० ४

इति ऋग्वेदप्रातिशाख्ये त्रयोदशं पटलम्

## अथ चतुर्दशं पटलम्

समुद्दिष्टा वर्णगुणाः पुरस्तान् निर्दिष्टानां सांहितो यश्च धर्मः
तदायापायव्यथनानि दोषास्तान्व्याख्यास्यामोऽत्र निदर्शनाय १

निरस्तं स्थानकरणापकर्षे विहारसंहारयोर्व्यासपीळने
ओष्ठाभ्यामम्बूकृतमाह नद्धं दुष्टं मुखेन सुषिरेण शूनम् २

संदष्टं तु व्रीळन आह हन्वोः प्रकर्षणे तदु विक्लिष्टमाहुः
जिह्वामूलनिग्रहे ग्रस्तमेतन् नासिकयोस्त्वनुषङ्गेऽनुनासिकम् ३

अयथामात्रं वचनं स्वराणां संदंशो व्यासः पीळनं निरासः
ग्रासः कण्ठ्ययोरनुनासिकानां संदष्टता विषमरागता वा ४

सान्तस्थानामादिलोपान्तलोपाव् अदेशे वा वचनं व्यञ्जनस्य
अन्योन्येन व्यञ्जनानां विरागो लेशेन वा वचनं पीळनं वा ५ १

घोषवतामनुनादः पुरस्तादादिस्थानां क्रियते धारणं वा
सोष्मोष्मणामनुनादोऽप्यनादो लोमश्यं च क्ष्वेलनमूष्मणां तु ६

वर्गेषु जिह्वाप्रथनं चतुर्षु ग्रासो मुख्ये प्रतिहारश्चतुर्थे
सरेफयोर्मध्यमयोर्निरासो विक्लेश स्थाने सकले चतुर्थे ७

अतिस्पर्शो बर्बरता च रेफे जिह्वान्ताभ्यां च वचनं लकारे
श्वासोऽघोषनिभता वा हकारे निरासोऽन्येषूष्मसु पीळनं वा ८

स्वरात्परम् पूर्वसस्थानमाहुर्दीर्घान्निरस्तं तु विसर्जनीयम्
कण्ठ्याद्यथा रेफवतस्तथाहू रक्तात्तु नासिक्यमपीतरस्मात् ९

संयोगादेरूष्मणः पूर्वमाहुर्विसर्जनीयमधिकं स्वरोपधात्

परं यमं रक्तपरादघोषाद् ऊष्माणं वा घोषिणस्तत्प्रयत्नम् १० २

शुनश्शेपो निष्षपी शास्सि निष्षाळविक्रमा ब्रह्म विष्णुः स्म पृश्निः
स्पर्शोष्मसंधीन्स्पर्शरेफसंधीनभिप्रायाँश्च परिपादयन्ति ११

स्वरौ कुर्वन्त्योष्ठ्यनिभौ सरेफौ तिस्रो मातृस्त्रीन्पितृन्यन् नृभिर्नृन्
दन्त्यान् सकारोपनिभानघोषान् रथ्यः पृथ्वी पृथिवी त्वा पृथीति १२

ऊष्मान्तस्थाप्रत्ययं रेफपूर्वं ह्रस्वं लुम्पन्त्याहुरथाप्यसन्तम्
पुरुषन्तिं पुरुवारार्यमाष्ट्र्यां हरियोजनाय हरियूपीयायाम् १३

ऐयेरित्यैकारमकारमाहुर्वैयश्वेति क्रमयन्तो यकारम्
तदेवान्येषु विपरीतमाहुस्ते रय्या वय्यं च हृदय्ययेति च १४

अकारस्य स्थान ऐकारमाहुर्लुम्पन्ति च सयमीकारमुत्तरम्
बह्वक्षरं द्व्यक्षरतां नयन्ति यथोनयीर्ध्वनयीत्कोशयीरिति १५ ३

तदेव चान्यत्र विपर्ययेण कार्य ऐत्वे सयमीकारमाहुः
धातोर्बिभेतेर्जयतेर्नियश्चाभैष्म चाजैष्म नैष्टेति चैषु १६

इकारस्य स्थान ऋकारमाहुर्लृकारं वा चन्द्रनिर्णिक्सुशिल्पे
अनन्तरे तद्विपरीतमाहुस्तालव्ये शृङ्गे बिभयाद्विचृत्ताः १७

तालुस्थानो व्यञ्जनादुत्तरश्चेदयकारस्तत्र यकारमाहुः
शुनःशेपः शास्सि ववर्जुषीणामत्के विरप्शीति निदर्शनानि १८

लुम्पन्ति वा सन्तमेवं य्वकारं ज्यैष्ठ्याय सम्वारन्नापृच्छ्यमृभ्वा
व्यस्यन्त्यन्तर्महतोऽव्यायतं तं दीर्घायुः सूर्यो रुशदीर्त ऊर्जम् १९

लुम्पन्त्यन्तस्थां क्रमयन्ति वैतां स्वरात्सस्थानादवरां परां वा
स्वस्तयऽधायि भुवनेयमूवू रक्तं ह्रस्वं द्राघयन्त्युग्रँ श्रोकः २० ४

हकारसोष्मोपहिताद्यकाराद् वकाराद्वा सर्वसोष्मोष्मपूर्वात्
तत्सस्थानं पूर्वमूष्माणमाहुस्तुच्छ्यान्दध्या आपृच्छ्यमृभ्वा ह्वयेऽह्यः २१

पकारवर्गोपहिताच्च रक्तादन्यं यमं तृप्णुताप्नानमौभ्नात्
अनुस्वारमुपधां वान्यवर्णां स्वरोपधात्सोष्मयमोदयश्चेत् २२

तङ्घ्नन्त्यञ्ज्मो जङ्घ्नत ईङ्खयन्तीः सञ्ज्ञातरूपोऽथ सञ्ज्ञानमिन्द्रः
सान्तस्थादौ धारयन्तः परक्रमं शर्मन्स्यामास्मिन्सु जनाञ्छु धीयतः २३

रक्तै रागः समवाये स्वराणां न नूनं नृम्णं नृमणा नृभिर्नॄन्
रक्तात्तु सोष्मा क्रियते हकारो दध्यङ्ह देवान्हवते महान्हि २४

संयोगानां स्वरभक्त्या व्यवायो विक्रमणं क्रमणं वामथोक्तम्
विपर्ययो वा व्यततिल्विलेऽज्मन् द्रप्सोऽजुष्न्सार्ञ्जयोऽष्ट्रांप्रनेष्ट्रात् २५ ५

विवृत्तिषु प्रत्ययादेरदर्शनं यथा या ऐच्छश्च य औशिजश्च
इउसंधौ संध्यवचनं च कासुचित् स इदस्ता कस्त उषो यथैते २६

समानवर्णासु विपर्ययो वा यथा ह्यूती इन्द्र क आसतश्च
अभिव्यादानं च विवृत्तिपूर्वे कण्ठ्ये ता आपोऽवसा एति दीर्घे २७

न दोषाणां स्वरसंयोगजानामन्तो गम्यः संख्ययाथेतरेषाम्
शक्यस्तु शास्त्रादधि साधु धर्मो युक्तेन कृत्स्नः प्रतिपत्तुमस्मात् २८

अकारस्य करणावस्थयान्यान् स्वरान्ब्रूयात्तद्धि संपन्नमाहुः
परानकारोदयवद्विवद्येत् सर्वत्र वर्णानिति संपदेषा २९

शास्त्रापवादात् प्रतिपत्तिभेदात् निन्दन्त्यकृत्स्नेति च वर्णशिक्षाम्
सैतेन शास्त्रैर्न विशिष्यतेऽन्यैः कृत्स्नं च वेदाङ्गमनिन्द्यमार्षम् ३० ६

इति ऋग्वेदप्रातिशाख्ये चतुर्दशं पटलम्

## अथ पञ्चदशं पटलम्

पारायणं वर्तयेद् ब्रह्मचारी गुरुः शिष्येभ्यस्तदनुव्रतेभ्यः
अध्यासीनो दिशमेकां प्रशस्तां प्राचीमुदीचीमपराजितां वा १

एकः श्रोता दक्षिणतो निषीदेद द्वौ वा भूयांसस्तु यथावकाशम्
तेऽधीहि भो३इत्यभिचोदयन्ति गुरुं शिष्या उपसंगृह्य सर्वे २

स ओ३मिति प्रस्वरति त्रिमात्रः प्रस्वार स्थाने स भवत्युदात्तः
चतुर्मात्रो वार्धपूर्वानुदात्तः षणमात्रो वा भवति द्विःस्वरः सन् ३

अध्येतुरध्यापयितुश्च नित्यं स्वर्गद्वारं ब्रह्म वरिष्ठमेतत्
मुखं स्वाध्यायस्य भवेन्न चैतत् संदध्यात्स्वाध्यायगतं परेण ४

प्रचोदितोऽभिक्रमते यथास्य क्रमः परस्ताद्विहितस्तथैव
सर्वोदात्तं त्विह तस्मिन्नपृक्तमक्षैप्रयुक्तं द्विरुपस्थितं वा ५ १

अभिक्रान्ते द्वैपदे वाधिके वा पूर्वं पदं प्रथमः प्राह शिष्यः
निर्वाच्ये तु भो३इति चोदना स्यान्निरुक्त ओं भो३इति चाभ्यनुज्ञा ६

परिपन्नं प्राकृतमूष्मसंधिं नकारस्य लोपरेफोष्मभावम्
असंयुक्तमृपरं रेफसंधिं विवृत्तिमित्यत्र निदर्शनानि ७

प्रत्युच्चार्यैतद्वचनं परस्य शिष्यस्य स्याद्भो३इति चोदना वा
अर्धर्चोदर्केषु तु वर्जयेयुरध्यायान्तेषूभयथा स्मरन्ति ८

गुरुः शिष्यस्य पदमाह मुख्यं समासश्चेदसमासो यदि द्वे
एतेन कल्पेन समाप्य प्रश्नं प्रत्याम्नायुस्तं पुनरेव सर्वे ९

तत ऊर्ध्वं संततं संवृतेन प्रविग्रहेण मृद्ववग्रहेण
सर्वोदात्तेन च चर्चयेयुः सर्व इमान्युपस्थापयन्तः पदानि १० २

अभ्युत्परा निर्व्युप सं प्रति प्र न्यध्यत्यपा दुःस्वपि पर्यवानु
आद्यं स्थितोपस्थितमेकमेषामर्धर्चान्ते कुर्युरथो द्विषंधौ ११

च घ हि वेति च सर्वत्र तेषामनेकं चेत्संनिपदेद् द्वितीयम्
समस्यन्तश्च द्विपदाद्यर्धर्चौ व्यवस्यन्त इतराश्चर्चयेयुः १२

दक्षिणाय प्रथमं प्रश्नमाह प्रदक्षिणं तत ऊर्ध्वं परीयुः
एवं सरवे प्रश्नशोऽध्यायमुक्त्वा उपसंगृह्यातिसृष्टा यथार्थम् १३

प्रश्नस्तृचः पङ्क्तिषु तु द्वृचो वा द्वे द्वे च पङ्क्तेरधिकाक्षरेषु
एका च सूक्तं समयास्त्वगण्याः परावराध्यां द्विपदे यथैका १४

सूक्तस्य शेषोऽल्पतरो यदि स्यात् पूर्वं स गच्छेद् यदि तु द्वृचो वा
ते षष्टिरध्याय उपाधिका वा सूक्तेऽसमाप्ते यदि ते समाप्ताः १५

भो३इत्यर्धर्चे गुरुणोक्त आह शिष्य ओं भो३इत्युचितामृचं च
अथैके प्राहुरनुसंहितं तत् पारयणे प्रवचनं प्रशस्तम् १६ ३

इति ऋग्वेदप्रातिशाख्ये पञ्चदशं पटलम्

## अथ षोडशं पटलम्

गायत्र्युष्णिगनुष्टुप् च बृहती च प्रजापतेः
पङ्क्तिस्त्रिष्टुब् जगती च सप्त च्छन्दांसि तानि ह १

अष्टाक्षरप्रभृतीनि चतुर्भूयः परं परम्
दैवान्यपि च सप्तैव सप्त चैवासुराण्यपि २

एकोत्तराणि देवानां तान्येवैकाक्षरादधि
एकावमान्यसुराणां ततः पञ्चदशाक्षरात् ३

तानि त्रीणि समागम्य सनामानि सनाम तत्
एकं भवत्यृषिच्छन्दस्तथा गच्छन्ति संपदम् ४

एवं त्रिप्रकृतीन्याहुर्युक्तानि चतुरुत्तरम्
ऋषिच्छन्दांसि तैः प्रायो मन्त्रः श्लोकश्च वर्तते ५ १

तत्पादो यजुषां छन्दः साम्नां तु द्वावृचां त्रयः
गायत्र्यादि जगत्यन्तमेकद्वित्र्यधिकं तु तत् ६

आर्षवत्तत्समाहारो ब्राह्मो वर्गः षळुत्तरः
अक्षराणि तु षट्त्रिंशद् गायत्री ब्रह्मणो मिता ७

यजुषां षळृचां त्रिः षट् साम्नां द्वादश संपदि
ऋषीणां तु त्रयो वर्गाः सप्तका एकधेतरे ८

ऋषिच्छन्दांसि गायत्री सा चतुर्विंशत्यक्षरा
अष्टाक्षरास्त्रयः पादाश्चत्वारो वा षळक्षराः ९

इन्द्रः शचीपतिर्बलेन वीळितः
दुश्च्यवनो वृषा समत्सु सासहिः १० २

पञ्चकाः पञ्च षड् वान्त्यः पदपङ्क्तिर्हिंसा भुरिक्
द्वौ वा पादौ चतुष्कश्च षट्कश्चैकस्त्रिपञ्चकाः ११

अधा हीन्द्रेति च तृचौ घृतमग्ने तमित्यृचः
अष्टको दशकः सप्ती विद्वांसाविति सा भुरिक् १२

युवाकु हीति गायत्री त्रयः सप्ताक्षरा विराट्
सैषा पादनिचृन्नाम गायत्रेवैकविंशिका १३

षट्कः सप्तकयोर्मध्ये स्तोतृणां विवाचीति
यस्याः सातिनिचृन्नाम गायत्री द्विर्दशाक्षरा १४

षट्कसप्तकयोर्मध्ये स्तुह्यासावातिथिम्

षळक्षरः प्रकृत्यैष व्यूहेनाष्टाक्षरोऽपि वा  १५   ३

उत्तरोत्तरिणः पादाः षट् सप्ताष्टाविति त्रयः
गायत्री वर्धमानैषा त्वमग्ने यज्ञानामिति  १६

अष्टकौ मध्यमः षट्क एकेषामुपदिश्यते
स नो वाजेषु पादौ द्वौ जागतौ द्विपदोच्यते  १७

आद्यान्त्यौ सप्तकौ यस्या मध्ये च दशको भवेत्
यवमध्या च गायत्री स सुन्व इति दृश्यते  १८

षळक्षरः सप्ताक्षरस्तत एकादशाक्षरः
एषोष्णिग्गर्भा गायत्री ता मे अश्व्यानामिति  १९

अष्टाविंशत्यक्षरोष्णिक् सा पादैर्वर्तते त्रिभिः
पूर्वावष्टाक्षरौ पादौ तृतीयो द्वादशाक्षरः  २०   ४

पुरउष्णिक् तु सा तस्मिन् प्रथमे मध्यमे ककुप्
अग्ने वाजस्य तच्चक्षुः सुदेवः समहेति च  २१

ऋचो निदर्शनायैताः परा यास्ता यथोदिताः
सप्ताक्षरैश्चतुर्भिर्द्वे नदं मंसीमहीति च  २२

पादैरनुष्टुभौ विद्यादक्षरैरुष्णिहाविमे
ददी रेक्ण इति त्वेषा ककुम्न्यङ्कुशिरा निचृत्  २३

एकादशोऽस्याः प्रथम उत्तमश्चतुरक्षरः
एकादशाक्षरौ च द्वौ मध्ये चैकः षळक्षरः  २४

उष्णिक् पिपीलिकमध्या हरी यस्येति दृश्यते
ताभ्यां परः षळक्षरः प्र या तनुशिरा नाम  २५   ५

आद्यः पञ्चाक्षरः पाद उत्तरेऽष्टाक्षरास्त्रयः
अनुष्टुब्गर्भैषोष्णिक्सागस्त्येऽस्ति पितुं न्विति २६

द्वात्रिंशदक्षरानुष्टुप् चत्वारोऽष्टाक्षराः समाः
कुतिर्द्वौ द्वादक्षाक्षरावेकश्चाष्टाक्षरः परः २७

यस्यास्त्वष्टाक्षरो मध्ये सा पिपीलिकमध्यमा
नवकौ द्वादशी द्व्यूना ता विद्वांसेति काविराट् २८

तेषामेकाधिकावन्त्यौ नष्टरूपा वि पृच्छामि
दशाक्षरास्त्रयो विराट् त्रयो वैकादशाक्षराः २९

षरामहापदपङ्क्तिस्तु षट्कोऽन्त्यः पञ्च पञ्चकाः
मा कस्मै पर्यूषु श्रुध्यग्ने तव स्वादिष्ठा ता ऋचः ३० ६

चतुष्पदा तु बृहती प्रायः षट्त्रिंशदक्षरा
अष्टाक्षरास्त्रयः पादास्तृतीयो द्वादशाक्षरः ३१

पुरस्ताद्बृहती नाम प्रथमे द्वादशाक्षरे
उपरिष्टाद्बृहत्यन्त्ये द्वितीये न्यङ्कुसारिणी ३२

स्कन्धोग्रीव्युरोबृहती त्रेधैनां प्रतिजानते
त्रयो द्वादशका यस्याः सा होर्ध्वबृहती विराट् ३३

महो योऽधीन्न तं मत्सीजानमिदजीजनः
अष्टिनोर्दशकौ मध्ये विष्टारबृहती युवम् ३४

एकागस्त्ये पितुस्तोमे नवाक्षरपदोत्तमा
द्वयोश्चोपेदमाहार्षं सर्वे व्यूहे नवाक्षराः ३५ ७

त्रयोदशाक्षरौ च द्वौ मध्ये चाष्टाक्षरो भवेत्

अभि वो वीरमित्येषा सा पिपीलिकमध्यमा ३६

नवकाष्ट दश सहैकः परमोऽष्ट च यदि पादाः
बृहती विषमपदा सा सनितः सुसनितरुग्र ३७

पङ्क्तिरष्टाक्षराः पञ्च चत्वारो दशका विराट्
आदेशेऽष्टाक्षरौ विद्यात् सोपसर्गेषु नामसु ३८

युग्मावष्टाक्षरौ पादावयुजौ द्वादशाक्षरौ
सा सतोबृहती नाम विपरीता विपर्यये ३९

आस्तारपङ्क्तिरादितः प्रस्तारपङ्क्तिरन्ततः
संस्तारपङ्क्तिर्मध्यतो विष्टारपङ्क्तिर्बाह्यतः ४० ८

मन्ये त्वा मा ते राधांसि य ऋष्व आग्निं महीति च
पितुभृतो नाग्ने तव ता ऋचोऽत्र निदर्शनम् ४१

चतुश्चत्वारिंशत् त्रिष्टुब् अक्षराणि चतुष्पदा
एकादशाक्षरैः पादैर्द्वौ चेत्तु द्वादशाक्षरौ ४२

प्रायस्योपजगत्येषा परस्यास्य तु सा त्रिष्टुप्
वैराजजागतैः पादैर् यो वाचेत्यभिसारिणी ४३

नवको दशको वा स्याद् एकोऽनेकोऽपि त्रिष्टुभः
एकादशाक्षरश्चापि विराट्स्थाना ह नाम सा ४४

पूर्वौ दशाक्षरौ पादा उत्तरेऽष्टाक्षरास्त्रयः
विराट्पूर्वा ह नामैषा त्रिष्टुप् पङ्क्त्युत्तरव वा ४५ ९

त्रयश्चैकादशाक्षरा एकश्चाष्टाक्षरः परः
विराड्रूपा ह नामैषा त्रिष्टुम्नाक्षरसंपदा ४६

त्रयश्च द्वादशाक्षरा एकश्चाष्टाक्षरः क्वचित्
एषा ज्योतिष्मती नाम ततो ज्योतिर्यतोऽष्टकः ४७

चत्वारोऽष्टाक्षराः पादा एकश्च द्वादशाक्षरः
सा महाबृहती नाम यवमध्या तु मध्यमे ४८

सो चिन्नु सनेमि श्रुध्येव क्रीळन्यद्वाग्निनेन्द्रेण
नमोवाके बृहद्भिश्च ता ऋचोऽत्र निदर्शनम् ४९

पञ्चाशज्जगती द्व्यूना चत्वारो द्वादशाक्षराः
तदस्या बहुलं वृत्तं महापङ्क्तिः षळष्टकाः
अष्टकौ सप्तकः षट्को दशको नवकश्च वा ५०

महासतोबृहत्यर्धे व्यूहयोरेतयोः सह
संपाते त्वेति पादान्ते देववान्सप्तविंशके ५१

अस्मा ऊ षूभे यदिन्द्र सेहान उग्रेति षट्
आ यः पप्रौ विश्वासां च ता ऋचोऽत्र निदर्शनम् ५२ १०

द्वावतिच्छन्दसां वर्गा उत्तरौ चतुरुत्तरौ
प्रथमातिजगत्यासां सा द्विपञ्चाशदक्षरा ५३

षट्पञ्चाशत्तु शक्वरी षष्टिरेवातिशक्वरी
उत्तराष्टिश्चतुःषष्टिस्ततोऽष्टाषष्टिरत्यष्टिः ५४

षट्सप्ततिस्त्वतिधृतिर्धृतिः पूर्वा द्विसप्ततिः
सर्वा दाशतयीष्वेता उत्तरास्तु सुभेषजे ५५

कृतिः प्रकृतिराकृतिर्विकृतिः संस्कृतिस्तथा
षष्ठी चाभिकृतिर्नाम सप्तम्युत्कृतिरुच्यते ५६

अशीतिश्चतुरशीतिरष्टाशीनिर्द्विनवतिः
षण्नवतिः शतं पूर्णमुत्तमा तु चतुःशतम्  ५७   ११

तमिन्द्रं प्रो षु सुषुम त्रिकद्रुकेष्वया रुचा
सखे च स हि शर्धश्च मध्यमो वर्ग उच्यते  ५८

आ सु कृतिस्तु प्रकृतिर्ध्रुवं पूर्वा ततस्तु या
आकृतिर्यदि ते मात्रा मेषी विकृतिरुच्यते  ५९

संकृतिस्तु न वै तत्र देवो अग्निस्त्वभिकृतिः
सर्वस्येत्युत्कृतिस्तत्र तृतीयो वर्ग उच्यते  ६०   १२

इति ऋग्वेदप्रातिशाख्ये षोडशं पटलम्

अथ सप्तदशं पटलम्

एवं क्लृप्तप्रमाणानां छन्दसामुपदिश्यते
एकद्व्यूनाधिका सैव निचृदूनाधिका भुरिक्  १

विराजस्तूत्तरस्याहुर्द्वाभ्यां या विषये स्थिताः
स्वराज एवं पूर्वस्य याः काश्चैवंगता ऋचः  २

याः काश्चिद् बहुपादास्तु गायत्र्यो हीनतां गताः
अक्षरैर्बहुभिस्तास्तु गायत्र्य उपधारयेत्  ३

ताराड् विराट् सम्राट् स्ववशिनी परमेष्ठी
प्रतिष्ठा प्रत्नममृतं वृषा शुक्रं जीवं पयः  ४

तृप्तमर्णोऽशोऽम्भोऽम्बु वार्यापश्चोदकमुत्तमम्
दैवतं छन्दसामत्र वक्ष्यते तत उत्तरम्  ५

अग्नेर्गायत्र्यतोऽधि द्वे भक्त्या दैवतमाहतुः
सप्तानां छन्दसामृचौ न पङ्क्तेः सा तु वासवी  ६   १

प्राजापत्या त्वतिच्छन्दा विच्छन्दा वायुदेवता
द्विपदा पौरुषं छन्दो ब्राह्मी त्वेकपदा स्मृता ७

एतेनैव क्रमेणैषां वर्णतो भक्तिरुच्यते
श्वेतं सारङ्गमतः पिशङ्गं कृष्णमेव च ८

नीलं च लोहितं चैव सुवर्णमिव सप्तमम्
अरुणं श्यामगौरे च बभ्रु वै नकुलं तथा ९

पृश्निवर्णं तु वैराजं निचृच्छ्यावं पृषद्भुरिक्
ब्रह्मसामर्ग्यजुश्छन्दः कपिलं वर्णतः स्मृतम् १०

मा प्रमा प्रतिमोपमा संमा च चतुरक्षरात्
चतुरुत्तरमुद्यन्ति पञ्च च्छन्दांसि तानि ह ११

हर्षीका सर्षीका मर्षीका सर्वमात्रा विराट्कामा
द्व्यक्षरादीनि मादीनां वैराजान्यनुचक्षते १२

अक्षराण्येव सर्वत्र निमित्तं बलवत्तरम्
विद्याद्विप्रतिपन्नानां पादवृत्ताक्षरैर्ऋचाम् १३

व्यूहेदेकाक्षरीभावान् पादेषूनेषु संपदे
क्षैप्रवर्णांश्च संयोगान् व्यवेयात्सदृशैः स्वरैः १४

पदाभेदेन पादानां विभागोऽभिसमीक्ष्य तु
छन्दसः संपदं तां तां यां यां मन्येत पादतः १५

प्रायोऽर्थो वृत्तमित्येते पादज्ञानस्य हेतवः
विशेषसंनिपाते तु पूर्वं पूर्वं परं परम् १६ ३

अनुदात्तं तु पादादौ नोवर्जं विद्यते पदम्

पादादावनुदात्तं तु यदन्यत्तदिहोदितम् १७

वशेऽस्तीयन्नसीत्येकं तृचे चाभिष्ट इत्यपि
नेतिपूर्वाणि सर्वाणि मधुच्छन्दस्यृतावृधौ १८

स्तोमशब्दे परेऽधायि ऋतशब्दे परे स्त्रिधत्
हुवे तुराणां यत्पूर्वं तृपन्मरुत उत्तरम् १९

प्रेदं ब्रह्मेति चैतस्मिन् सूक्ते पादोऽस्ति पञ्चमः
सर्वानुदात्तः षट्स्वृत्त्वादितश्च चतुर्दशः २०

पादौ गायत्रवैराजावष्टाक्षरदशाक्षरौ
एकादशिद्वादशिनौ विद्यात् त्रैष्टुभजागतौ २१ ४

वर्षिष्ठाणिष्ठयोरेषां लघूपोत्तममक्षरम्
गुर्ववेतरयोर्ऋक्षु तद् वृत्तं छन्दसां प्राहः २२

एतैश्छन्दांसि वर्तन्ते सर्वाण्यन्यैरतोऽल्पशः
एतद्विकारा एवान्ये सर्वे तु प्राकृताः समाः २३

एक एकपदैतेषां द्वौ पादौ द्विपदोच्यते
ते तु तेनैव प्रोच्येते सरूपे यस्य पादतः २४

न दाशतय्येकपदा काचिदस्तीति वै यास्कः
अन्यत्र वैमद्याः सैका दशिनी मुखतो विराट् २५

आहुस्त्वेकपदा अन्ये अध्यासानेकपातिनः
अध्यासानपि केचित्त्वाहुरेकपदा इमाः २६

आ वां सुम्ने असिक्न्यां द्वे उरौ देवाः सिषक्तु नः
पादा एकाधिकाः सन्ति च्छन्दसां चतुरक्षरात् २७ ५

सन्त्यतिच्छन्दसां पादा एकोत्कर्षेण जागतात्
षोळशाक्षरपर्यन्ता एकश्चाष्टादशाक्षरः २८

एकादशैव च्छन्दसि पादा ये षोळशाक्षराः
सर्वे त्रिकद्रुकीयासु नाकुलोऽष्टादशाक्षरः २९

अवर्महोऽविकर्षेण ज्येष्ठा दाशतयीष्वृचाम्
विकर्षेण तु पादैश्च स हि शर्ध इति स्मृता ३०

अणिष्ठा बहुपादानां भारद्वाजी पुरूतमम्
अविकर्षेण सौभरी प्रेष्ठम्वादि ह्रसीयसी ३१

विराजो द्विपदाः केचित् सर्वा आहुश्चतुष्पदाः
कृत्वा पञ्चाक्षरान्पादाँस् तास्तथाक्षरपङ्क्तयः ३२ ६

इति ऋग्वेदप्रातिशाख्ये सप्तदशं पटलम्

अथाष्टादशं पटलम्

बार्हतो बृहतीपूर्वः ककुप्पूर्वस्तु काकुभः
एतौ सतोबृहत्यन्तौ प्रगाथौ भवतो द्वृचौ १

त्वमङ्ग प्र प्र वो यह्वं मा चिद् बृहदु गायिषे
बार्हताः काकुभानाहुस् तं गूर्धय वयम्विति २

अनुष्टुब्द्वे च गायत्र्यावेष आनुष्टुभः स्मृतः
विराजावभिसंपन्नः पद्याक्षर्ये स उत्थितः ३

आकृतिर्व्यपदेशानां प्राय आदित आदितः
गायत्र्यादिस्तु बार्हते प्रायो गायत्रबार्हतः ४

गायत्रकाकुभो नाम प्रायो भवति काकुभे
औष्णिहस्तूष्णिहापूर्वः पङ्क्त्यन्तः पाङ्क्तकाकुभः ५ १

तमिन्द्रम् च सुनीथश्च यमादित्यास एव च
अदान्मे पौरुकुत्स्यश्च सा ऋचोऽत्र निदर्शनम् ६

महासतोबृहत्यन्तो यो महाबृहतीमुखः
स महाबार्हतो नाम बार्हतो बृहतीमुखः ७

अथो अतिजगत्यन्तो यवमध्योत्तरोऽपि च
बृहद्भिस्तं वो नेमिं च वामी वामस्य ता ऋचः ८

नहि ते विपरीतान्तो मो षु त्वा द्विपदाधिकः
अनुष्टुब्जगती चैव विश्वेषामिरज्यन्तं च ९

द्विपदा बृहती चैव स नो वाजेष्विति स्मृतः
ककुप्पूर्वस्तु को वेद स्मृतः काकुभबार्हतः १० २

आनुष्टुभौष्णिहं विद्यात् ते म आहुर्य आययुः
ते नस्त्राध्वं बृहत्यादिर्बार्हतानुष्टुभः स्मृतः ११

अग्नि वः पूर्व्यमित्येषोऽनुष्टुप्पङ्क्तिरेव च
यदध्रिगावो अध्रिगू ककुप् च त्रिष्टुबेव च १२

यदद्य वामनुष्टुप् च त्रिष्टुप् चैवोपदिश्यते
यत्स्थो दीर्घेति च त्वेष बृहती त्रिष्टुबेव च १३

आ यन्मा वेनास्त्रिष्टुप् च जगती चोपदिश्यते
ता वृधन्तावनुष्टुप् च महासतोमुखैव च १४

जागतस्त्वददा अर्भा प्रागाथस्त्रिष्टुबुत्तरः
उत्तरस्त्रैष्टुभस्तस्माज्जगत्युत्तर उच्यते १५ ३

त्वमेताञ्जन च द्वौ द्वौ स घा राजेति च स्मृतौ

त्वमस्य पारे रजसो जागतौ त्रिष्टुबुत्तरौ १६

सव्यञ्जनः सानुस्वारः शुद्धो वापि स्वरोऽक्षरम्
व्यञ्जनान्युत्तरस्यैव स्वरस्यान्त्यं तु पूर्वभाक् १७

विसर्जनीयानुस्वारौ भजेते पूर्वमक्षरम्
संयोगादिश्च वैवं च सहक्रम्यः परक्रमे १८

गुर्वक्षरं लघु ह्रस्वं न चेत्संयोग उत्तरः
अनुस्वारश्च संयोगं विद्याद्व्यञ्जनसंगमम् १९

गुरु दीर्घं गरीयस्तु यदि सव्यञ्जनं भवेत्
लघु सव्यञ्जनं ह्रस्वं लघीयो व्यञ्जनादृते २० ४

छन्दस्तुरीयेण समानसंख्या याश् छन्दसोऽन्यस्य भवन्त्यृचोऽन्याः
यावत्तुरीयं भवति स्वमासां तावत्य एता इतरा भवन्ति २१

द्वाभ्यामवस्येत् त्रिपदासु पूर्वं पादेन पश्चात्क्वचिदन्यथैतत्
मध्येऽवसानं तु चतुष्पदानां त्रिभिः समस्तैरवरैः परैर्वा २२

पङ्क्त्यां द्विशो वा तत उत्तरेण त्रिभिः परैर्वा विपरीतमेतत्
द्विशस्त्रिशो वा परतश्चतुर्भिः स्यात्षट्पदानामवसानमेतत् २३

त्रिभिस्तु पूर्वं तत उत्तरं स्याद् द्विशस्त्रिशो वा यदि वा समस्तम्
द्वाभ्यां पुनः सप्तपदावसानं द्वाभ्यां च मध्येऽष्टपदासु विद्यात् २४

अग्निमीळे दृतेरिव गायन्त्येतमधीन्न्विति
अयं चक्रं नकिष्टं च नकिर्देवा मिनीमसि २५ ५

विश्वान्देवान्हवामहे स क्षपो निष्कं सुषुम
नहि वां प्रो षु स हि शर्धस् ता ऋचोऽत्र निदर्शनम् २६

द्वाभ्यां पादेन द्वाभ्यां तु तव त्यत्पञ्चपदाष्टिः
अव्यूहेनातिशक्वरी तृतीयः षोळशाक्षरः २७

चतुर्भिस्तत एकेनाग्ने तमद्येति च
चतुर्भिस्तु परं द्वाभ्यां तव स्वादिष्ठा तच्छंयोः २८

भरद्वाजाय तच्छक्षुरधीद् वृक्षा द्वतेरिव
एतासु न व्यवस्यन्त्येके द्वादशकादिषु २९

प्रश्नस्तृचः पङ्क्तिषु तु द्वृचो वा द्वे द्वे च पङ्क्तेरधिकाक्षरेषु
एका च सूक्तं समयास्त्वगणयाः परावरार्ध्या द्विपदे यथैका ३०

सूक्तस्य शेषोऽल्पतरो यदि स्यात् पूर्वं स गच्छेद्यदि तु द्वृचो वा
ते षष्टिरध्याय उपाधिका वा सूक्तेऽसमाप्ते यदि ते समाप्ताः ३१ ६

सर्वाणि भूतानि मनो गतिश्च स्पर्शाश्च गन्धाश्च रसाश्च सर्वे
शब्दाश्च रूपाणि च सर्वमेतत् त्रिष्टुब्जगत्यौ समुपैति भक्त्या ३२

गुर्वक्षराणां गुरुवृत्ति सर्वं गुर्वक्षरं त्रैष्टुभमेव विद्यात्
लघ्वक्षराणां लघुवृत्ति सर्वं लघ्वक्षरं जागतमेव विद्यात् ३३

यश्छन्दसां वेद विशेषमेतं भूतानि च त्रैष्टुभजागतानि
सर्वाणि रूपाणि च भक्तितो यः स्वर्ग जयत्येभिरथामृतत्वम् ३४

स्वर्गं जयत्येभिरथामृतत्वम् ७

इति ऋग्वेदप्रातिशाख्येऽष्टादशं पटलम्
इति तृतीयोऽध्यायः
इति ऋग्वेदप्रातिशाख्यं समाप्तम्